**सहदेवः**[1]—( सानुनयम् । ) आर्य, एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः ।

**भीमसेनः**[2]—किं नाम कदाचित्खिद्यते गुरुः । गुरुः खेदमपि जानाति । पश्य ।

> तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
> वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
> विराटस्यावासे स्थितमनुचितारम्भनिभृतं
> गुरुः खेदं खिन्ने मयि भजति[3] नाद्यापि कुरुषु ॥ ११ ॥

तत्सहदेव, निवर्तस्व । एवं चोतिचिरप्रवृद्धामर्षोद्दीपितस्य[4] भीमस्य वचनाद्विज्ञापय राजानम् ।

**सहदेवः**—आर्य[5], किमिति ।

**भीमसेनः**—

> युष्मच्छासनलङ्घनांहसि[6] मया मग्नेन नाम स्थितं
> प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।

---

१ 'सहदेवः—एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः' एवंविधः पाठः क्वचित्. २. 'भीमसेनः—( सहासम् । ) किं नाम मयि खिद्यते गुरुः । ( सामर्षम् । ) गुरुः । खेदमपि जानाति'; अथवा 'भीमसेनः—किं नाम मयि खिद्यते गुरुः । वत्स, गुरुः खेदमपि जानाति'; अथवा 'भीमसेनः—(सवाष्पक्रोधम् । ) किं नाम कदाचित्खिद्यते गुरुः ( सामर्षम् । ) वत्स, गुरुः खेदमपि जानाति'; अथवा 'भीमसेनः—(सहासम् ।) किं नाम, गुरुः खेदमपि जानाति' इति नानापुस्तकेषु नानाविधः पाठः. ३. 'वहति'. ४. 'चापि चिरप्रवृद्धामर्षोद्दीपितस्य' इति पाठान्तरम्. ५ 'आर्य, किं विज्ञापयामि' इति पाठान्तरम्. ६ 'लंघनाम्भसि'.

हेलोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
न्नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥ १२ ॥

(इत्युद्धतं परिक्रामति ।)

**सहदेवः**—( तमेवानुगच्छन्नात्मगतम् । ) अये, कथमार्यः पाञ्चाल्याश्चतुःशालकं प्रति प्रस्थितः । भवतु तावदहमत्रैव तिष्ठामि (इति स्थितः ।

**भीमसेनः**—(प्रतिनिवृत्त्यावलोक्य च ।) सहदेव, गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि ।

**सहदेवः**—आर्य, नेदमायुधागारम्, पाञ्चाल्याश्चतुःशालकमिदम्

**भीमसेनः**—( सवितर्कम् । ) किं नाम नेदमायुधागारम्, पाञ्चाल्याश्चतुःशालकमिदम् । ( किंचिद्विहस्य । ) आमन्त्रयितव्यैव मया पाञ्चाली । ( सप्रणयं सहदेवं हस्ते गृहीत्वा । ) वत्स, आगम्यताम् । यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु ।

---

१ 'क्रोधोच्छ्वासित', 'क्रोधोल्लालित' २ 'इति साटोपं परिक्रामति', 'इत्युत्क्रम्य परिक्रामति' ३ 'प्रविष्टः'. ४ 'परानिवृत्य' ५ 'सहदेवः—आर्य, नेदमायुधागारम् । भीमः—किं तर्हि । सहदेवः—पाञ्चाल्याश्चतुःशालकमिदम्' इत्यपि क्वचित्पाठः ६ 'सवितर्कम्' इति क्वचिन्नास्ति. ७ '( विचिन्त्य सहर्षम् । )' इति पाठान्तरम् ८ 'एव' इति क्वचिन्नास्ति ९ एतदनन्तरं केचित् '( सहदेवं हस्ते गृहीत्वा ।) वत्स, यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति । पश्यतु । उभौ—(प्रवेशं नाटयतः । ) सहदेवः—आर्य, इदमासनमास्तीर्णम् । अत्रोपविशत्वार्यः । पालयतु कृष्णागमनम्' इति पठन्ति अन्ये च '( सप्रणयं सहदेवं हस्ते गृहीत्वा । ) वत्स, आगम्यताम् । सहदेवः—यदादिशत्यार्यः । भीमसेनः—वत्स, यदार्यः कुरुभिः संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु । (परिक्रम्य उभौ गृहप्रवेशं नाटयतः । भीमः सक्रोधं भूमावुपविशति ।) सहदेवः—( ससंभ्रमम् । ) आर्य, इदमासनमास्तीर्णम् । अत्रोपविश्यार्यः पालयतु कृष्णागमनम् ।' इति

( उभौ प्रवेशं नाटयतः । भीमसेनः सक्रोधं भूमावुपविशति । )

**सहदेवः**—( ससंभ्रमम् । ) आर्य, इदमासनमास्तीर्णम् । अत्रोपविश्यार्यः पालयतु कृष्णागमनम् ।

**भीमसेनः**—( उपविश्य स्मृत्वा । ) वत्स, कृष्णागमनमित्यनेनोपोद्घातेन संस्मृतम् । अथ भगवान्कृष्णः केन पणेन संधिं कर्तुं सुयोधनं प्रति प्रहितः ।

**सहदेवः**—आर्य, पञ्चभिर्ग्रामैः ।

**भीमसेन**—( कर्णौ पिधाय । ) अहह, देवस्याजातशत्रोरप्ययमीदृशास्तेजोपकर्ष इति यत्सत्यं कम्पितमिव मे हृदयम् । ( परिक्रम्य स्थित्वा । ) तद्वत्स, न त्वया कथितं न च मया भीमेन श्रुतम् ।

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥ १२ ॥

( नेपथ्ये । )

समस्ससदु समस्ससदु भट्टिणी । ( क )

**सहदेवः**—( नेपथ्याभिमुखमवलोक्यात्मगतम् । ) अये कथं याज्ञसेनी मुहुरुपचीयमानबाष्पपटलस्थगितनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम् ।

---

(क) समाश्वसितु समाश्वसितु भट्टिनी ।

---

१. 'अत्रोपविश्य मुहूर्तमार्यः' इति पाठः. २. ' उपविश्य स्मृत्वा । ' इति क्वचिन्नास्ति. ३ 'कथोद्घातेन'. ४ 'तत्स्मृतम्'. ५. 'प्रकारेण'. ६. 'प्रेषितः,' ७. 'अहह, हन्त, देवस्य'; ' अहह, कथं तस्य देवस्य. ' ८. 'न मया श्रुतं न त्वया कथितम्'; 'न त्वया कथितं न च भीमसेनेन श्रुतम्' । इति पाठान्तरम्. ९. 'समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णुं गिवाणुबद्धकुरुवेरो कुमालो भीमसेणो ।' इति क्वचित्पाठः. १०. 'कर्णं दत्त्वा, नेपथ्याभिमुखमवलोक्य, आत्मगतम्' इत्यपि पाठः. ११. 'मुहुर्मुहुरुपचितबाष्पपटलस्थगितनयना आर्यस्य समीपं समुपसर्पति । तत्कष्टात्कष्टतरमापतितम्'; अथवा, ' मुहुरुपचीयमानबाष्पपटलनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम्'; अथवा 'मुहुरुपचीयमानबाष्पपटलावृतनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम् ' इति नानापुस्तकेषु नानाविधः पाठः.

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥ १४ ॥

( ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च । )

( द्रौपदी सास्रं निश्वसिति । )

**चेटी**—समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुलवेरो कुमालो भीमसेणो[3] । ( क )

**द्रौपदी**—हञ्जे, होदि एदं जइ महाराओ पडिऊलो ण भवे । (ख)

**चेटी**—एसो कुमालो चिट्ठदि । ता ण उवसप्पदु भट्टिणी । (ग)

**द्रौपदी**—हञ्जे, एव्वं करेह्म । (घ)

( उभे परिक्रामतः । )

**चेटी**—जअदु जअदु कुमालो । (ङ)

**भीमः**—( अपश्यन्निव 'यत्तद्वूर्जितम्' इति पुनः पठति । )

(क) समाश्वसितु समाश्वसितु भट्टिनी । अपनेष्यति ते मन्युं नित्यानुबद्धकुलवैरः कुमारो भीमसेनः ।

(ख) हञ्जे भवति एतद् यदि महाराजः प्रतिकूलो न भवेत् ।

(ग) एष कुमारस्तिष्ठति । तदेनमुपसर्पतु भट्टिनी ।

(घ) हञ्जे एवं कुर्वः ।

(ङ) जयतु जयतु कुमारः ।

१ 'आयस्तोधेन संभृतम्' २ 'सबाष्पं निश्वसिति' ३ एतदनन्तरम्, 'द्रौपदी—हञ्जे बुद्धिमदिए, होदि एदं जइ महाराओ पडिऊलो ण भवे। ताणाह पेक्खिदुं तुवरदि मे हिअअं। ता अदेसेहि मे णाहस्स वासभवणं। चेटी—एदु एदु भट्टिणी।

( इति परिक्रामतः । )

चेटी—एदं वासभवणं। एत्थ पविसदु भट्टिणी। द्रौपदी—हञ्जे कहेहि णाहस्स मह आगमणं। चेटी—जं देवी आणवेदि। ( इति परिक्रम्योपसृत्य च। ) जअदु जअदु कुमालो। इति पाठः बहुपुस्तकेषु दृश्यते ४ 'महाराअस्स पडिऊलो हुविस्सदि' इति पाठान्तरम्

[1]चेटी—( परिवृत्य ) भट्टिणी, पिअं दे णिवेदेमि । परिकुविदो विअ कुमालो लक्खीअदि । ( क )

द्रौपदी—हञ्जे, जइ एव्वं ता अवहीरणावि एसा मं आसासअदि । ता[2] उवविट्ठा भविअ सुणोमि दाव णाहस्स ववसिदं । ( ख )

( उभे[3] तथा कुरुतः । )

भीमसेनः—( [4]सहदेवमधिकृत्य । ) किं नाम पञ्चभिर्ग्रामैः संधिः ।

मथ्नामि कौरवशतं समरे न कोपा-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥ १५ ॥

द्रौपदी—( [5]सहर्षम् । जनान्तिकम् । ) [6]णाह, अस्सुदपुव्वं क्खु दे एदिसं वअणं । ता पुणो पुणो दाव भणाहि । (ग)

( [7]भीम·—सहदेव, पश्य । 'मथ्नामि कौरवशतं'–( १।१५ ) इत्यादि पुनः पठति । )'

---

(क) भट्टिनी, प्रियं ते निवेदयामि । परिकुपित इव कुमारो लक्ष्यते ।

(ख) हञ्जे, यद्येवं तदवधीरणाप्येषा मामाश्वासयति । तद् उपविष्टा भूत्वा शृणोमि तावन्नाथस्य व्यवसितम् ।

( ग ) नाथ, अश्रुतपूर्वं खलु त ईदृशं वचनम् । तत्पुनः पुनस्तावद्भण ।

---

१. 'चेटी—देवि, परिकुविदो विअ कुमालो लक्खिअदि' इति पुस्तकान्तरस्थः पाठः, २. 'एअन्तरे' इति क्वचित्. ३. 'इति तथा कुरुतः'; 'तथा कुरुतः' ४. 'सक्रोधम् । सहदेवमधिकृत्य । ' इति क्वचित्पाठः. ५. 'श्रुत्वा । सहर्षम्' इति पाठः ६. ' णाह, अस्सुदपुव्वं एदिसं वअणं ता पुणोविभणाहि' इति बहुपुस्तकेषु पाठः. ७. ( भीमसेनोऽशृण्वन्नेव 'मथ्नामि कौरवशतं–' इति पुनः पठति । ) इति क्वचित्पाठः.

**सहदेवः**—आर्य, किं महाराजस्य संदेशोऽयमार्येणाव्युत्पन्न इव गृहीतः ।

**भीमसेनः**—का पुनरत्र व्युत्पत्तिः ।

**सहदेवः**—आर्य, एवं गुरुणा संदिष्टम् ।

**भीमसेनः**—कस्य ।

**सहदेवः**—सुयोधनस्य ।

**भीमसेनः**—किमिति ।

**सहदेवः**—

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान्कंचिदेकं च पञ्चमम् ॥ १६ ॥

**भीमसेनः**—ततः किम् ।

**सहदेवः**—तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदाहद्यूतसभापकारस्थानोद्घाटनमेवेदं मन्ये ।

**भीमसेनः**—( साटोपम् । ) वत्स, एवं कृते किं भवति ।

**सहदेवः**—आर्य, एवं कृते लोके तावत्स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं भवति, कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता भवति ।

**भीमसेनः**—मूढ, सर्वमप्येतदनर्थकम् । कुरुराजस्य तावदसंधेयता तदैव प्रतिपादिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य

---

१. 'अयमार्येण' इति क्वचिन्नास्ति. २. 'एव'. ३. 'तत्र' ४. 'आर्य' इति क्वचिन्नास्ति. ५. 'आर्येण'. ६ 'भीमसेनः—किमिति' इति क्वचिन्नास्ति. ७ 'देहि मे चतुरो ग्रामान्पञ्चमं कंचिदेव तु' इति भिन्नः पाठः. ८. 'दाह' इति क्वचिन्नास्ति. ९. 'मन्यामहे'. १०. 'किं कृतं भवति'. ११. 'लोकेऽप्ययशः स्वगोत्रक्षयाशङ्कि' इति पाठान्तरम्. १२. 'आविष्कृतं, कुरुराजस्यासंधेयता च दर्शिता भवति' इति बहुपुस्तकेषु पाठः. १३. 'मूढ' इति क्वचिन्नास्ति. १४ 'निवेदिता'

निधनं प्रतिज्ञातम् । लोकेऽपि च धार्तराष्ट्रकुलक्षयः किं लज्जाकरो भवताम् । अपि च रे मूर्ख,

> युष्मान्हेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
> न लज्जयति दाराणां सभायां केशकर्षणम् ॥ १७ ॥

**द्रौपदी**—( जनान्तिकम् । ) णाह, ण लज्जन्ति एदे । तुमं विदाव मा विसुमरेहि । (क)

**भीमसेनः**—वत्से, कथं चिरयति पाञ्चाली ।

**सहदेवः**—आर्य, का खलु वेलात्रभवत्याः प्राप्तायाः । किंतु रोषावेशवशौदार्येण नोपलक्षिता ।

**भीमसेनः**—( विहस्यावलोक्य च । ) कथमागता । (सादरम्) देवि, चर्चितामर्षैरस्माभिरागतापि भवती नोपलक्षिता । अतो न मन्युं कर्तुमर्हसि ।

**द्रौपदी**—णाह उदासीणेसु तुम्हेसु मण्णु, ण उण कुविदेसु । (ख)

---

(क) नाथ, न लज्जन्त एते । त्वमपि तावन्मा विस्मार्षीः ।

( ख ) नाथ, उदासीनेषु युष्मासु मन्युः, न पुनः कुपितेषु ।

---

१. एतदन्तरं पुस्तकान्तरे 'प्रसिद्धश्च लोकेऽपि धार्तराष्ट्रकुलक्षयः । (सहदेवो लज्जां नाटयति । ) भीमः—किं लज्जाकरो भवताम् अपि च रे मूर्ख' इति पाठो दृश्यते. २. 'वत्स' इत्येतस्मात्पूर्वं '( सस्मरणम् ।)' इति क्वचिदधिकः पाठः. ३ एतदनन्तरम् ' त्वरते मे मनः सङ्ग्रामावतरणाय' इति क्वचिदधिकः पाठः. ४. 'तत्रभवत्याः'. ५. 'आर्यागतापि' इति क्वचित्. ६. 'न लक्षिता.' ७. 'दृष्ट्वा'; 'विहस्यावलोक्य च, सादरम्'; ( दृष्ट्वा, सादरम् । ) इति नानापुस्तकेषु नानाविधः पाठः ८. ' समुद्धतामर्षैः'. ९. 'मह' इति क्वचित्.

**भीमसेनः**—यद्येवमपगतपरिभवमात्मानं समर्थयस्व । (हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्य ।) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि ।

**द्रौपदी**—णाह, किं उव्वेअकालणम् तुह्मेसु सण्णिहिदेसु । (क)

**भीमसेनः**—किमिति नावेदयसि । (केशानवलोक्य ।) अथवा किमावेदितेन ।

जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेषु च ।
पाञ्चालराजतनया वहते यदिमां दशाम् ॥ १८ ॥

**द्रौपदी**—हञ्जे बुद्धिमदिए, कहेहि णाहस्स । को अण्णो मह परिहवेण खिज्जइ । (ख)

**चेटी**—ज देवी आणवेदि । (भीममुपसृत्य । अञ्जलिं बद्ध्वा ।) [६] सुणादु कुमालो । इदोवि अहिअदर अज्ज उव्वेअकालण आसी देवीए । (ग)

**भीमसेनः**—किं नामास्मादप्यधिकतरम् । बुद्धिमतिके, कथय ।

कौरव्यवशदावेऽस्मिन् क एष शलभायते ।
मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव ॥ १९ ॥

---

(क) नाथ, किमुद्वेगकारणं युष्मासु सन्निहितेषु ।

(ख) हञ्जे बुद्धिमतिके, कथय नाथस्य कोऽन्यो मम परिभवेन खिद्यते ।

(ग) यद्देव्याज्ञापयति । शृणोतु कुमारः । इतोऽप्यधिकतरमद्योद्वेगकारणमासीद्देव्याः ।

१ णाह, किं वि उव्वेअकालणं 'णाह, ण किं वि उव्वेअकालणम्' , २. 'केशानवलोक्य, निश्वस्य' इति क्वचित्पाठः ३ 'अपि' ४ 'वहतीयमिमां दशाम्'. ५ 'णिवेदेदि दाव णाहस्स' ६ 'कुमाल इदोवि अहिअ अज्ज मण्णुकालणं आसी देवीए,' अथवा 'कुमाल, अदोवि अज्ज,अत्थि अवरं मण्णुकालणं देवीए उप्पण्णं' इति भिन्न पाठः ७ 'बद्धवेणीम्' -

**भीमसेनः**—सहदेव, श्रुतम् ।

**सहदेवः**—आर्य, उचितमेवैतत्तस्याः । दुर्योधनकलत्रं हि सा । पश्य ।

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ॥ २० ॥

**भीमसेनः**—बुद्धिमतिके, ततो देव्या किमभिहितम् ।

**चेटी**—कुमाल, जइ पडिहीणं मम वअणं भवे तदो देवी भणादि । (क)

**भीमसेनः**—किं पुनरभिहितं भवत्या ।

**चेटी**—तदो मए परिकुप्पिअ भणिअं । अइ भाणुमदि, तुह्माणं अमुक्केसु केसहत्थेसु कधं अह्माणं देवीए केसा संजमीअन्तित्ति (ख)

**भीमसेनः**—(सपरितोषम् ।) साधु बुद्धिमतिके, साधु । तदभिहितं यदस्मत्परिजनोचितम् । (अधीरमासनादुत्तिष्ठन् ।) भवति पाञ्चालराजतनये, श्रूयताम् । अचिरेणैव कालेन ।

---

(क) कुमार, यदि परिहीनं मम वचनं भवेत्तदा देवी भणति ।
(ख) ततो मया परिकुप्य भणितम् । अयि भानुमति, युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति ।

---

१. 'आर्य, किमिहोच्यते । दुर्योधनकलत्रं हि सा' इति बहुपुस्तकेषु पाठः. २. ... विषविटपसमाश्रिता'. ३. 'परिजणहीणं भवे' इति ब-पुस्तकानां पाठः; 'मम बुद्धिपडिहीणत्तणं तदो देवी भणादि' इत्यपि क्वचित्पाठः. ४. 'कुमाल, ...एवं भणिदं' इति पाठः. ५ 'केसेसु.' ६. 'अभिहितं भवत्या' इति पाठः. ७. '...अधीरमासनादुत्तिष्ठन् । )' इत्यत्र क्वचित् '( स्वाभरणानि बुद्धिमतिकायै ...ददाति ।)' इति पाठो दृश्यते; '(स्वाभरणानि बुद्धिमतिकायै प्रयच्छति ।) ...आसनादुत्तिष्ठन् ।' इत्यपि क्वचित्पाठः ८. 'अत्रभवति पञ्चालराजतनये, ...ना । श्रूयताम् ।'; अथवा भवति पाञ्चालराजतनये, ...भवतु । पञ्चालराजतनये, श्रूयताम् ।'; अथवा 'अयि पाञ्चालतनये, ...दिन । किं बहुना; यत्करिष्ये तच्छ्रूयताम् ।' इति पाठान्तराणि.

**चेटी**—सुणादु कुमालो। अज्ज क्खु भट्टिणी सहीए सहिदा, सुभ-ाप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जाए गन्धालीए पादवन्दणं कादुं ादा। (क)

**भीमसेनः**—युक्तमेतत्। वन्द्याः खलु गुरवः। ततस्ततः।

**चेटी**—तदो पडिणिवुत्तमाणा भाणुमदीए दिट्ठा। (ख)

**भीमसेनः**—(सक्रोधम्।) आः, शत्रोर्भार्यया दृष्टा। हन्त, स्थानं क्रोधस्य देव्याः। ततस्ततः।

**चेटी**—तदो ताए देवीं पेक्खिअ सहीजणदिण्णदिट्ठीए सगव्वं ईसि विहसिअ भणिअं।(ग)

**भीमः**—न केवलं दृष्टा, उक्ता च। अहो किं कुर्मः। ततस्ततः

**चेटी**—अइ जण्णसेणि, पञ्चग्गामा पत्थीअन्ति त्ति सुणीअदि। त कीस दाणीं वि दे केसा ण संजमीअन्ति। (घ)

---

(क) शृणोतु कुमारः। अद्य खलु भट्टिनी सख्या सहिता सुभद्राप्रमुखेण त्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गता।

(ख) ततः प्रतिनिवर्तमाना भानुमत्या देवी दृष्टा।

(ग) ततस्तया देवीं प्रेक्ष्य सखीजनदत्तदृष्टया सगर्वमीषद्विहस्य भ

(घ) अयि याज्ञसेनि, पञ्च ग्रामाः प्रार्थ्यन्त इति श्रूयते तत्कस्मादिदान केशा न संयम्यन्ते।

---

१. 'क्खु' इति क्वचिन्नास्ति; 'अज्ज क्खु देवी अम्बासहिदा इत्य २. 'गदा आसी'. ३. 'युज्यत' यतोऽभिवन्दनीया गुरवः'; अथवा 'एवमेतत्। अभिवन्दनीया गुरवः' इति पाठान्तरे. ४. 'दृष्टा' ५. 'आः कथम्'. ६. 'युक्तं क्रोधस्थानम्'; 'स्थानं क्रोध देव्याः'; 'स्थानं खेदस्य देव्याः' इति पाठान्तराणि. ७. 'सहीअण ति ८. एतदन्तरं अइ जण्णसेणि, कीस तुम्हाणं अज्जवि संजमाण बहुपुस्तकेषु दृश्यते.

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
  सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
  [2]रुत्तंसयिष्यति कचांस्तव देवि भीम ॥ २१ ॥

द्रौपदी—किं णाह, दुक्करं [3]तुए परिकुविदेण । [4]सव्वहा [5]अणु-गेह्णन्तु एदं ववसिदं दे भादरो । (क)

सहदेवः—[6]अनुगृहीतमेतदस्माभिः ।

( नेपथ्ये महान्कलकलः । सर्वे सविस्मयमाकर्णयन्ति । )

[7]भीमसेनः—

[8]मन्थायस्तार्णवाम्भः[9]प्लुतकुहर[10]चलन्मन्दरध्वानधीरः
  कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः [11]कुरुकुलनिधनोत्पातनिर्घातवातः
  केनास्मत्सिंहनादप्रतिरसित[12]सखो दुन्दुभि[13]स्ताड्यतेऽयम् ॥ २२ ॥

( प्रविश्य सम्भ्रान्तः । )

कञ्चुकी—कुमार, एष खलु भगवान्वासुदेवः ।

( सर्वे कृताञ्जलयः समुत्तिष्ठन्ति । )

---

(क) किं नाथ, दुष्करं त्वया परिकुपितेन । सर्वथानुगृह्णन्त्वेनद्व्यवसितं ते भ्रातरः ।

---

१ 'नापनिद्धः' 'अवनद्ध' २ 'उत्तम्भयिष्यति'. ३ 'तुइ परिकुविदे' इति पाठः ४ 'सव्वहा' इति क्वचिन्नास्ति ५ 'तधावि अणुगेह्णन्तु देव- ववसिदं देवदाओ', 'अणुगेह्णन्तु तुए एदं ववसिदं देवदाओ' इति पाठान्तरे ६ 'प्रतिगृहीतं मङ्गलवचनमस्माभिः' इति पाठः. ७ 'भीमसेनः—( सानन्दम् । ) आर्ये, किमेतत्' इति क्वचिदधिकः पाठः. ८ 'मन्थायस्तार्णवाम्भः' ९ 'प्लुति' १० 'वल्गन्' ११ 'कुरुपति' १२. 'समो'. १३ 'ताडितो'

**भीमसेनः**—'( ससम्भ्रमम् । ) कोसौ भगवान् ।

**कञ्चुकी**—पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्ध

( सर्वे सम्भ्रम नाटयन्ति । )

**भीमसेनः**—किं सयतः ।

**कञ्चुकी**—नहि नहि, सयमितुमारब्ध ।

**भीमसेनः**—कि कृतं देवेन ।

**कञ्चुकी**—तत स महात्मा दर्शितविश्वरूपतेज .. ` मवधूय कुरुकुलमस्मच्छिबिरसनिवेशमनुप्राप्तः कुमारमविलम्बितं ... च्छति ।

**भीमसेनः**—( सोपहासम् । ) किं नाम दुरात्मा सुयोधनो ...वन्त सयमितुमिच्छति । ( आकाशे दत्तदृष्टिः । ) आ' दुरात्म ... सन, एवमतिक्रान्तमर्यादि त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भ...

**सहदेवः**—आर्य, किमसौ दुरात्मा सुयोधनहतको ... भगवन्त स्वरूपेण न जानाति ।

**भीमसेनः**—वत्स, मूढ खल्वय दुरात्मा कथं जानातु । पश्य ।

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठा ।
य वीक्षन्ते कमपि तमसा ज्योतिषा वा परस्ता-
त्तं मोहान्ध कथमयममु वेत्तु देव पुराणम् ॥ २३ ॥

१. 'ससंभ्रमम्' इति क्वचिन्नास्ति. २. 'क्वासौ क्वासौ भगवान्'. ... 'संयन्तुम्'. ४. 'कथं स भगवान्वासुदेव सयत·' इत्यपर· पाठः. ५ 'भीमः— ( सपरितोषम् । ) हन्त, विघटितः सन्धिभंगमार्ग्रू च सुयोधनस्य । अथ कि... कृत देवेन' इत्यपि क्वचित्पाठ . ६. 'विहस्य' इति पाठ . ७. 'पांसुल'. ... 'सुयोधनो'. ९ 'स्वेन रूपेण'. १०. 'मतयः'; 'धृतयः'. ११. 'ज्ञानोत्सेकात्'. १२. 'ध्यायन्ते'. १३. 'किमपि'. १४. 'मोहात्मा'. १५ 'वेत्ति'.

आर्य जयंधर, किमिदानीमध्यवस्यति गुरुः ।

**कञ्चुकी**—स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः । इति निष्क्रान्तः । )

( नेपथ्ये कलकलानन्तरम् । )

भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयोऽस्मदक्षौहिणीपतयः रवचमूप्रधानयोधाश्च, शृण्वन्तु भवन्तः ।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुकुले यौधिष्ठिरं जृम्भते ॥ २४ ॥

**भीमसेनः**—(*आकर्ण्य । सहर्षम् ।*) जृम्भतां जृम्भतामप्रतिहतप्रसरर्यस्य क्रोधज्योतिः ।

**द्रौपदी**—णाह, किं दाणीं एसो पळअजलहरत्थणिदमंसलो क्खणे क्खणे समरदुन्दुही ताडीअदि । (क)

---

(क) नाथ, किमिदानीमेष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताडयते ।

---

१. 'आर्य मैत्रेय, किमिदानीमध्यवस्यन्ति गुरवः' इति बहुपुस्तकानां पाठः. २. 'नृपवधू'. ३. 'कुरुवने'. ४. '( आकर्ण्य । सहर्षामर्षम् । )' इति क्वचित्पाठः ५. 'भीमसेनः—( सहर्षम् । ) जृम्भतां जृम्भताम् । संप्रत्यप्रतिहतमार्यस्य क्रोधज्योतिः' इति दशरूपके पाठः. ६. 'आर्यक्रोधज्योतिः.' ७. द्रौपदी—(सविस्मयम् । ) णाह' इति क्वचित्पाठः. ८. 'कहं'. ९. 'पळअजलहरघणत्थणिदमंसलो क्खणे क्खणे समरदुन्दुही ताडीअदि'; अथवा 'पळअजलहरत्थणिअमंसलो क्खणे क्खणे चण्डघोसो समरदुन्दुही ताडीअदि'; अथवा 'पळअजलहरघणत्थणिदमंसलो क्खणे क्खणे समरदुन्दुही चण्डघोसो दारुणो ताडीअदि' इति नानापुस्तकेषु नानाविधः पाठः.

**भीमसेनः**—देवि, किमन्यत्। यज्ञ प्रवर्तते।

**द्रौपदी**—(सविस्मयम्।) को एसो जण्णो। (क)

**भीमसेनः**—रणयज्ञ। तथाहि।

चत्वारो वयमृत्विज स भगवान्कर्मोपदेष्टा हरि
सग्रामाध्वरदीक्षितो नरपति पत्नी गृहीतव्रता।
कौरव्या पशव प्रियापरिभवक्लेशोपशान्ति फल
राजयोपनिमन्त्रणाय रसति स्फीत यशोदुन्दुभि ॥ २५॥

**सहदेवः**—आर्य, गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम्।

**भीमसेनः**—वत्स, एते वयमुद्यता आर्यस्यानुज्ञामनुष्ठातुमेव (उत्थाय।) ³पाञ्चालि, गच्छामो वयमिदानीं कुरुकुलक्षयाय।

**द्रौपदी**—(बाष्प धारयन्ती।) णाह, असुरसमराहिमुहस्स हरिणो विअ मङ्गल तुह्माण होदु। ⁴ज च अम्बा कुन्दी आसासदि त तुह्माण होदु। (ख)

**उभौ**—प्रतिगृहीत मङ्गलवचनमस्माभि।

---

(क) क एप यज्ञ।

(ख) नाथ, असुरसमराभिमुखस्य हरेरिव मङ्गल युष्माक भवतु। यच्चाम्बा कुन्त्याशास्ते तद्युष्माक भवतु।

---

१ 'हतो दुन्दुभि' २ 'उद्यता एवार्यस्यानुज्ञामनुष्ठातुम्' इत्यपि पाठ ३ 'देवि, गच्छाम:' ४ 'ज च अम्बाकुन्दी—' इत्यादि क्वचिन्नास्ति। एतद्वचन क्वचिन्नास्ति

**द्रौपदी**[1]—अण्णं च णाह, पुणोवि तुह्मेहिं समरादो आअच्छिअ अहं समास्सासइदव्वा । (क)

**भीमसेनः**—[2]ननु पाञ्चालराजतनये, किमद्याप्यलीकाश्वासनया ।

भूयः[3]परिभवक्षान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न [4]पश्यसि वृकोदरम् ॥ २६ ॥

**द्रौपदी**—णाह, मा क्खु मा क्खु जण्णसेणीपरिहवुद्दीविदकोवाणला अणवेक्खिदसरीरा [5]संचरिस्सध । जदो अप्पमत्तसंचरणिज्जाइं रिउबलाइं सुणीअन्ति । (ख)

**भीमसेनः**—[6]अयि सुक्षत्रिये,

---

(क) अन्यच्च नाथ, पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या ।

(ख) नाथ, मा खलु मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनवेक्षितशरीरः। संचरिष्यथ । यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते ।

---

१. 'चेटी—अण्णं च देवी भणादि । णाह, तुह्मेहिं पुणोवि समरादो आअच्छिअ अहं आसासइदव्वा' इति बहुपुस्तकानां पाठः; दशरूपके तु, 'द्रौपदी—णाह, पुणोवि तुम्हेहिं अहं आअच्छिअ समासासिदव्वा' एवंविधः पाठो वर्तते. २. 'देवि, किमिवालीकाश्वासनाभिः'; अथवा 'देवि, किमद्याप्यलीकाश्वासेन'; अथवा 'देवि, किमलीकाश्वासनेन'; अथवा 'देवि, किमिवालीकाश्वासनेन' इति नानाविधः पाठः. ३. 'परिभवक्लान्तिलज्जाबन्धुरिताननम्' इत्यपि पाठः. ४. द्रक्ष्यसि'. ५. 'परिक्रमिस्सध'. ६. 'शृणु सुक्षत्रिये, समर्था वयं संक्रमितुं'; अथवा 'अयि सुक्षत्रिये, समर्था वयमस्मिन्रणे परिक्रमितुम् । शृणु'; अथवा 'अयि सुक्षत्रिये, समर्था वयमस्मिन्रणे परिक्रमितुम् । शृणु;' अथवा ' अयि सुक्षत्रिये, समर्था वयं संक्रमितुम्' इति नानाविधः पाठः.

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
संग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताःपाण्डुपुत्राः ॥२७॥

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

## द्वितीयोऽङ्कः ।

(ततः प्रविशति कञ्चुकी ।)

**कंचुकी**—आदिष्टोऽस्मि महाराजदुर्योधनेन—'विनयंधर, सत्वरं गच्छ त्वम् । अन्विष्यतां देवी भानुमती । अपि निवृत्ता अम्बाया पाद-वन्दनसमयान्न वेति । यतस्तां विलोक्य निहताभिमन्यवो राधेयजयद्रथप्रभृतयोऽस्मत्सेनापतयः समरभूमिं गत्वा संभाजयितव्याः' इति । तन्मया द्रुततरं गन्तव्यमिति । अहो प्रभविष्णुता महाराजस्य, यन्मम जरसाभिभूतस्य मर्यादामात्रमेवावरोधव्यापारः । अथवा किमिति जरामुपालभेय, यतः सर्वान्त पुरचारिणामयमेव व्यवहारिको वेषश्चेष्टा च । तथाहि ।

नोच्चैः सत्यपि चक्षुषीक्षितुमलं श्रुत्वापि नाकर्णितं
शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्ब्यते ।
सर्वत्र स्खलितेषु दत्तमनसा जातं तथा नोद्धतं
सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ॥ १ ॥

(परिक्रम्य दृष्ट्वा । आकाशे ।) विहङ्गिके, अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती । (कर्णं दत्त्वा ।) किं कथयसि—'आर्य, एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्तितगुरुदेवपादवन्दनाद्यप्रभृत्यारब्धनियमा देवगृहे बालोद्याने तिष्ठतीति । तद्भद्रे, गच्छ त्वमात्मव्यापा-

---

१ 'आज्ञापितोऽस्मि' इति पाठः २ 'यथा विनयधर' ३ 'सत्वरम्' इति क्वचिन्नास्ति ४ 'यतो मया तामवलोक्य' इति पाठः ५. 'द्रोणराधेयजयद्रथप्रभृतयः' इति क्वचित्पाठः ६ 'अस्मत्' इति क्वचिन्नास्ति ७ 'समाश्वासयितव्याः' ८ 'अवरोधनिवासः' ९ 'उपालभे', 'उपालभामहे' १० 'सर्वेषामेवायमन्तःपुरचारिणां वैहारिको वेषः' 'सर्वान्तःपुरिकाणामयमेव व्यावहारिको वेषः' इति पाठान्तरम् ११ 'चक्षुषीक्षितमलम्' १२ 'नाकर्णितुम्' १३. 'समालम्बिता'. १४ 'मया' १५ 'सेवास्वीकृतजीवितस्य' १६ 'कर्णं दत्त्वा, आकाशे' इति क्वचित्पाठः १७ 'गुरुपादवन्दना' १८ 'देवगृहे' इति क्वचिन्नास्ति

राय, यावदहमप्यत्रस्था देवीं महाराजस्य निवेदयामीति । (परिक्रम्य ।) साधु पतिव्रते साधु, स्त्रीभावेऽपि वर्तमाना घर भजती न पुनर्महाराज । योऽयमुद्यतेषु बलवत्सु, अथवा किं बलवत्सु वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्वद्याप्यन्तःपुरविहारसुखमनुभवति । (विचिन्त्य ।) इदमपरमयथातथ स्वामिनश्चेष्टितम् । कुत ।

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरय भीष्म शरे शायित ।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुष प्रीतोऽभिमन्योर्वधात् ॥ २ ॥

तथा दैव न स्वस्ति करिष्यति । तद्यावदत्रस्था देवीं महाराजस्य निवेदयामि । (इति निष्क्रान्त ।)

विष्कम्भक ।

(तत प्रविशत्यासनस्था देवी भानुमती सखी चेटी च ।)

**सखी**—सहि भाणुमदि, कीस दाणिं तुमं सिविणअदंसणमेत्तस्स कदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्व णिअलिदधीरभावा अतिमेत्त सतप्पसि । (क)

---

(क) सखि भानुमति, कस्मादिदानीं त्व स्वप्नदर्शनमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैव विगलितधीरभावातिमात्र सतप्यसे ।

---

१ 'अहमपि महाराजस्य सदेशमावेदयामि इति क्वचित्पाठ २ 'अपि' क्वचिन्नास्ति ३ 'बलवत्स्वबलवत्सु वा वासुदेवसहायेषु' इति बहव , ४ 'अरिषु च' इति पुस्तकान्तरे पाठ ५ 'अन्त पुरविहारम्', 'अन्त पुरसुखम्' ६ 'इदमपरमयथाथचेष्टित स्वामिन ', 'इदमयथातथ स्वामिनश्चेष्टितम्' इति च पाठ ७. 'न स्वस्ति करिष्यति ' इति युक्त पाठ , 'करिष्यतीति' इति क्वचित्पाठः ८. 'यावदहमत्रस्था देवी भानुमती निवेदयामि महाराजस्य' इति क्वचित्पाठ .

**चेटी**—भट्टिणि, सोहण भणादि सुवअणा । सिविणअन्तो जणो किं ण क्खु प्पलवदि । (क)

**भानुमती**—हञ्जे, एव्व णेद । किंउ एद सिविणअ अदिमेत्त अकुसलदसण मे पडिभादि । (ख)

**सखी**—जइ एव्वं ता कहेदु पिअसही । जेण अहे वि पडिट्ठावअन्तीओ प्पससाए देवदासकित्तणेण अ पडिहडिस्सामो । (ग)

**चेटी**—देवि एव्व णेद । अकुसलदसणा वि सिमिणआ पसंसाए कुसलपरिणामा होंति त्ति सुणीअदि । (घ)

---

(क) भट्टिनि, शोभन भणति सुवदना । स्वप्नजन किं न खलु प्रलपति ।

(ख) हञ्जे, एवमेतत् । किं त्वय स्वप्नोऽतिमात्रमकुशलदर्शनो मे प्रतिभाति ।

(ग) यद्येव तत्कथयतु प्रियसखी । येनावामपि प्रतिष्ठापयन्त्यौ प्रशसया देवतासकीर्तनेन च परिहरिष्याव ।

(घ) देवि, एवमेतत् । अकुशलदर्शना अपि स्वप्ना प्रशसया कुशलपरिणामा भवन्तीति श्रूयते ।

---

१ एतदनन्तरम् 'भानुमति—एव्व ण्णेद ।' इति क्वचिदधिक पाठ २ 'सिविणअन्तो जणो ण हु किं वि ण प्पलवदि', अथवा 'सिविणअन्तो जणो ण हु किं किं ण प्पलवदि, अथवा 'सिविण अन्तो जणो किं किं ण विप्पलवदि', अथवा 'सिविणिअन्तो जणो ण किं प्पलवदि इति च पाठान्तरम्' ३ 'किं उण एद मे अकुसलदसण पडिभादि सिविणअ', अथवा 'मम उण अकुसलदसण पडिभादि सिविणअ', अथवा 'किं उण एद अकुसल पडिभादि सिविणअ इति नानापुस्तकेषु नानाविध पाठ २ 'पिअसहि, जइ एव्व ता कहहि सिविणअ । ज अह्मे वि पडिस्सावअन्तीओ धम्मप्पसंसाए देवदासंकित्तणेण दुव्वादिपडिग्गहेण अ पडिहडिस्सामो' इति पाठ ३ 'देवि, एव्व णेद' इत्यत्र 'भट्टिणि, सोहण क्खु भणादि सुवअणा', अथवा 'सोहण क्खु भणादि सुवअणा इति पाठान्तरम् ४ 'वि' इति क्वचिन्नास्ति ५ 'देवदाण पससाए' इति बहुपुस्तकाना पाठ

**भानुमती**—[1]जइ एव्वं ता कहइस्सम्। [2]अवहिदा होध। (क)

[3]**सखी**—कहेदु पिअसही[4]। (ख)

**भानुमती**—मुहुत्तं चिठ्ठ जाव सव्वं सुमरिस्सम्। (इति चिन्तां नाटयति)। (ग)

(ततः प्रविशति दुर्योधनः कञ्चुकी च।)

**दुर्योधनः**—सूक्तमिदं [5]कस्यचित्।

गुप्त्या साक्षान्महानल्पःस्वयमन्येन वा कृतः।
करोति महतीं प्रीतिमपकारोऽ[6]पकारिणाम्।

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्य समु[7]च्छ्वसितमिव नश्चेतसा।

---

(क) यद्येवं तत्कथयिष्ये। अवहिते भवतम्।

(ख) कथयतु प्रियसखी।

(ग) मुहूर्तं तिष्ठ यावत्सर्वं स्मरिष्यामि।

---

१. 'जइ एव्वं ता' इत्यत्र 'हला देण हि' इति क्वचित्पाठः. २. 'अवहिदाव होहि' इति बहुपुस्तकानां पाठः. ३. 'सखी—अवहिदह्मि। कहे पिअसही।' इति बहुपुस्तकानां पाठः. ४. एतदनन्तरं केषुचित्पुस्तके 'भानुमती—अज्ज किल मे पमदवणे आसीणाए अग्गदो केण वि अदिसइदा व्वहवेण णउलेण अहिसदं घादादिदम्। उभे—(अवधार्यात्मगतम्।) स पावं सन्तं पावम्। पडिहदममङ्गलम्। (प्रकाशम्।) देवि, तदो तदे भानुमती—हला, भएण विसुमरिदह्मि। ता चिट्ठ जाव सव्वं सुमरि कहइस्सम्। (इति चिन्तां नाट्यति।)' इति पाठो वर्तते; क्वचित्तु 'भानुम —हला, भएण विसुमरिदह्मि। ता चिट्ठ जाव सव्व सुमरिअ अहइस्सम (इति चिन्तां नाट्यति।)' इति पाठः समुपलभ्यते. ५. 'कस्यापि'. ६. 'अपकारिषु'. ७. 'उच्छ्वसितमिव'.

**कञ्चुकी**—देव, नैवमतिदुष्करमाचार्यस्य शस्त्रप्रभावात्। कर्णजयद्रथयोर्वा का नामात्र श्लाघा।

**राजा**—विनयंधर, किमाह भवान्। एको बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुङ्गवानाम्। तदत्र न खलु कश्चि--त्रेपः। मूढ, पश्य।

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति॥ ४॥

**कञ्चुकी**—( सवैलक्ष्यम्। ) देव, न ममायं संकल्पः। किंतु वः गौरुषप्रतीघातोऽस्माभिर्नालोचितपूर्व इत्यत एवं विज्ञापयामि।

**राजा**—एवमिदम्।

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे नचिरात्पाण्डुसुतः सुयोधनम्॥ ५॥

**कञ्चुकी**—(कर्णौ पिधाय। सभयम्।) शान्तं पापम्। प्रतिहतममङ्गलम्।

**राजा**—विनयंधर, किं मयोक्तम्।

**कञ्चुकी**—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्
स्वबलेन निहन्ति संयुगे नचिरात्पाण्डुसुतं सुयोधनः॥ ६॥

एतद्विपरीतमभिहितं देवेन।

---

१. 'नेदमतिदुष्करमाचार्यशस्त्रप्रभावाणाम्'; 'नेदमतिदुष्करमाचार्यस्यास्त्रप्रभावेण'. २. 'नाम' इति क्वचिन्नास्ति. ३. 'भगवान्'. ४. एकाकी बहुभिर्बालो लूनशरासनश्च निहत इति। पश्य' इति पाठः. ५. 'देवनैवेदं कल्पयितुमर्हसि' इति पाठः. ६. 'यतः'. ७. 'तव'. ८. 'नावलोकितपूर्वः'; 'नावलोचितपूर्वः' ९. 'यत एवं ब्रवीमि' इति क्वचित्पाठः. १०. 'एवमेवैतत्'; 'एवमेतत्'. ११. 'सबलम्'. १२. 'शान्तं पापं शान्तं पापम्' इति क्वचित्पाठः

**राजा**—विनयधर, अद्य खलु भानुमती यथापूर्व मामनामन्त्र्य वास भवनात्प्रातरेव निष्क्रान्तेन्ति व्याक्षिप्त मे मन । तदादिशय तमुद्देश यत्रस्था भानुमती ।

**कञ्चुकी**—इत इतो देव ।

(उभौ परिक्रामत ।)

**कंचुकी**—(पुरोऽवलोक्य । समन्ततो गन्धमाघ्राय ।) देव, पश्य पश्य। एत तुहिनकणशिशिरसमीरणोद्वेल्लितबन्धनच्युतशेफालिकाविरचितकुसुमप्रकरसीपदालोहितमुग्धनधूकपोलपाण्डुफलिनीनिर्जितश्यामलतासौभाग्यमुन्मीलितबहुलकुन्दकुसुमसुरभिशीतल प्रभातकालरमणीयमग्रतस्ते बालोद्यानम् । तदवलोकयतु देव । तथाहि ।

प्रालेयमिश्रमकरन्दकराळकोश
पुष्पै सम निपतिता रजनीप्रबुद्धे ।
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
ससूचितानि कमलान्यलय पतन्ति ॥ ७ ॥

**राजा**—(समन्तादवलोक्य ।) विनयधर, इदमपरमस्मिन्नुपासि रमणीयतरम् । पश्य ।

जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै
र्भाभिर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धा. ।

---

१ 'आत्मानम्' २. 'आक्षिप्तम्' ३ 'चेत'. ४ 'इत इत एतु देव.' 'इत एतु देव' ५ 'समीरणोद्वेल्लितवृन्तबन्धुरशेफालिका–' ६. 'प्राकारम्'. ७ 'कपोलपाटललोध्रप्रसूनविजित–' ८ 'वितत' ९ 'बकुल'. १० 'कुन्दकुसुमसुरभिशीतलम्', 'कुन्दलसमशीतलपरिमलम्'. ११. 'रजनीविबुद्धे' १२ 'प्रयान्ति'. १३ 'समन्तादवलोक्य' इति क्वचिन्नास्ति १४. 'रमणीयतरमवलोकय' 'रमणीयतरमवलोक्यते'. १५ 'हस्तैर्भानो', 'भानोदस्रै'.

स्त्रीभि॰ सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुञ्चन्त्येते विकचनलिनीगर्भशय्या द्विरेफा ॥ ८ ॥

**कंचुकी**—देव, नन्वेषा भानुमती सुवदनया तरलिकया च सहोपविष्टा तिष्ठति। तदुपसर्पतु देव।

**राजा**—(दृष्ट्वा।) आर्य विनयधर, गच्छ त्वं सांग्रामिकं मे रथमुपकल्पयितुम्। अहमप्येनां देवीं दृष्ट्वानुपदमागत एव।

**कंचुकी**—एष कृतो देवादेश। (इति निष्क्रान्त।)

**सखी**—पिअसहि, अवि सुमरिदं तुए। (क)

**भानुमती**—सहि, सुमरिदम्। अज्ज किल पमदवणे आसीणाए मम अग्गदो एव्व दिव्वरूविणा णउलेन अहिसद वावादिदम्। (ख)

**उभे**—(अपवार्य आत्मगतम्।) सन्त पावम्। पडिहद अमङ्गलम्। (प्रकाशम्।) तदो तदो। (ग)

**भानुमती**—अदिसदावोव्विग्गहिअआए विसुमरिदं मए। ता पुणोवि सुमरिअ कहइस्सम्। (घ)

---

(क) प्रियसखि, अपि स्मृत त्वया।

(ख) सखि, स्मृतम्। अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशत व्यापादितम्।

(ग) शान्त पापम्। प्रतिहतममङ्गलम्। ततस्तत।

(घ) अतिसतापोद्विग्नहृदयया विस्मृत मया। तत्पुनरपि स्मृत्वा कथयिष्ये।

---

१ 'महाराज, एषा देवी सुवदनातरलिकाभ्या सह सुखोपविष्टा तिष्ठति' इति क्वचित्पाठ २ 'पर्युपास्यमाना' ३ 'एव' इति पुस्तकान्तरे नास्ति ४. 'यथा ज्ञापयति देव' इति पाठ ५ 'भानुमती—सहि, सुमरिदम्। सखी—कहेदु पिअसही। भानुमती—अज्ज किल' इति पुस्तकान्तरे पाठ ६ 'अग्गदो क्खेणवि अदिसइदद्दिव्वरूवेण' इति पाठ ७ 'सन्त पाव मज्ज पाव' इति पाठ ८. 'सदावावगहद्दहिअआए पुणोवि मए विसुमरिदम्' इति बहुपुस्तकाना पाठ

राजा—अहो, देवी भानुमती सुवादनातरलिकाभ्या सह किमपि मन्त्रयमाणा तिष्ठति । भवतु । अनेन लताजालेनान्तरित शृणोमि तावदासा विश्रब्धालापम् । (तथा स्थित ।)

सखी—सहि, अल सदावेण । कहेदु पिअसही । (क)

राजा—किं नु खल्वस्या सतापकारणम् । अथवानामन्त्र्य मामि यमद्य वासभवनान्निष्क्रान्तेति समर्थित एवास्या मया कोप । अयि भानुमति, अविषय खलु दुर्योधनो भवत्या कोपस्य ।

किं कण्ठे शिथिलीकृतो भुजलतापाश प्रमादान्मया
　　निद्राच्छेदविवर्तनेष्वभिमुख नाद्यासि सभाविता ।
अन्यस्त्रीजनसकथालघुरह स्वप्ने त्वया लक्षितो
　　दोष पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ९ ॥

(विचिन्त्य ।) अथवा ।

इयमस्मदुपाश्रयकचित्ता
　　मनसा प्रेमनिबद्धमत्सरेण ।
नियत कुपितातिवल्लभत्वा
　　त्स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥ १० ॥

---

(क) सखि, अल संतापेन । कथयतु प्रियसखी ।

---

१ 'राजा-(अवलोक्य ।) अहो' इति क्वचित्पाठ २ 'इति तथा स्थित', 'इति तथा कृत्वा स्थित' ३ 'सखी—अल सदावेण । कहेदु पिअसही', 'उभे—सहि, अल संदावेण । कहेदु पिअसही', 'सखी—अइ, अल संदावेण । कहेदु पिअसही' इति नानाविध पाठ ४ 'मयि'. ५ 'कोपस्य' 'पदम' इति क्वचिदधिक पाठ ६ 'अभिमुखी'

तथापि शृणुमस्तावत्किं नु वक्ष्यतीति ।

**भानुमती**—तदो अहं तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा हिदहिअआ अ । तदो उज्झिअ तं आसणट्ठाणं लदामण्डवं पविसिदुं आरद्धा । (क)

**राजा**—(सवैलक्ष्यम् ।) किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । तत्किमनया पापया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः । ('सोत्प्रेक्षम्' इयमस्मद-' (२।१०) इति पठित्वा ।) मूढ दुर्योधन, कुलटाविप्रलभ्यमानमात्मानं बहु मन्यमानोऽधुना किं वक्ष्यसि । अहो, एतदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनसंकथासु च पक्षपातः । दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः । आः पापे मत्परिग्रहपांसुले

तद्भीरुत्वं तव मम पुरः साहसानीदृशानि
श्लाघा सास्मद्वपुषि विनयव्युत्क्रमेऽप्येष रागः।
तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः
ख्याते तस्मिन्वितमसि कुले जन्म कौलीनमेतत् ।

---

(क) ततोऽहं तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च तत उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा ।

---

१. 'तथापि किं वक्ष्यतीति शृणुमस्तावत्' इति क्वचित्पाठः. २. 'भानुमती—हला, अहं तदो तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा । ३. 'राजा—किं नाम' इति बहुपुस्तकानां पाठः । राजा—किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता । तत्कथमनया माद्रीसुतानुरक्तया' इति पुस्तकान्तरे पाठः. ४. 'किं न वक्ष्यति'; 'किं किं न वक्ष्यसि'. ५. एतदनंतरं '( किं कण्ठे-' इत्यादि पठित्वा । दिशोऽवलोक्य )' इति केषुचित्पुस्तकेषु पाठः ६. 'कथासु'. ७. 'अस्मत्परिग्रहपांसुले' 'मत्परिग्रहपांसनि'. ८ 'जन्म लोकापवादः' इति क्वचित्पाठः.

**सखी**—तदो तदो (क)

**भानुमती**—तदो सोवि मं अणुसरन्तो एव्व लदामण्डवं पविट्ठो। (ख)

**राजा**—अहो, कुलटोचितमस्याः पापाया अशालीनत्वम्।

यस्मिंश्चिरप्रणयनिर्भरबद्धभाव-
मावेदितो रहसि मत्सुरतोपभोगः।
तत्रैव दुश्चरितमद्य निवेदयन्ती
ह्रीणासि पापहृदये न सखीजनेऽस्मिन्॥ १२॥

**उभे**—तदो तदो। (ग)

**भानुमती**—तदो तेण संप्पगब्भपसारिअकरेण अवहिदं मे त्थणंसुअम्।

**राजा**—( विचिन्त्य। ) सप्रगल्भप्रसारितकरेणापहृतं मे स्तनांशुकम्। ( सक्रोधम्। ) अलमिदानीमतःपरमाकर्णनेन। भवतु तावत्तस्य परवनितास्कन्दनप्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि। (किंचिद्गत्वा। विचिन्त्य।) अथवा इयमेव तावत्पापशीला प्रथममनुशासनीया (इति निवर्तते।)

---

(क) ततस्ततः।
(ख) ततः सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः।
(ग) ततस्ततः।
(घ) ततस्तेन सपंगर्भ-( सप्रगल्भ )प्रसारितकरेणापहृतं मे स्तनांशुकम्।

---

१. 'तदो सोवि' इत्यस्मात्पूर्वं केषुचित्पुस्तकेषु 'तदो हं सुवरिदं आअणञ्जणं एदं लदामण्डवं पविट्ठा' इत्यधिकः पाठो वर्तते. २. 'एतस्याः'. ३. 'पापशीलायाः'. ४. 'पापशीलत्वम्'; 'दुःशीलत्वम्.' ५. बालभावं ६. 'ह्रीतासि'. ७. 'उगन्भं पसारिअकरेण अवगहिअं. ८. अथवा 'राजा—( सक्रोधम्। ) अलं—' इति क्वचित् ९. 'अलमतःपरं श्रुत्वा' इति क्वचित्पाठः.

**उभे**—तदो तदो (क)

**भानुमती**—तदो अज्जउत्तस्स पभादमङ्गलतूररवमिस्सेण वारविलासिणीजणसगीदरवेण पडिबोधिदह्मि । (ख)

**राजा**—(सवितर्कम् ।) किं नाम प्रतिबोधितास्मीति स्वप्नदर्शनमनया वर्णितं भवेत् । अथवा सखीवचनादेव व्यक्तिर्भविष्यति ।

( उभे सविषादमन्योन्यं पश्यतः । )

**सुवदना**—ज एत्थ अचाहिदं तं भाईरहीप्पमुहाणं णईणं सलिलेण अवहारीअदु । बह्मणाणं हुदाहुदिसुअग्गिणा जलणेण अवहारीअदु । (ग)

**राजा**—अलं विकल्पेन । स्वप्नदर्शनमेवैतदनया वर्णितम् ।
मया पुनर्मन्दधियाऽन्यथैव सभावितम् ।

दिष्ट्यार्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो

दिष्ट्या नो परुषं रुषार्धकथने किंचिन्मया व्याहृतम् ।

(क) ततस्ततः ।

(ख) तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसगीतरवेण प्रतिबोधितास्मि ।

(ग) यदिहात्याहितं तद्भागीरथीप्रमुखानां नदीनां सलिलेनापह्रियताम् । ब्राह्मणानां हुताहुतिसुगन्धिना ज्वलनेनापह्रियताम् ।

१ हला, तदो अह अज्जउत्तस्स' २ 'वारविलासिणीसगादसद्देण' ३ 'सवितर्कम्' इति क्वचिन्नास्ति ४ किं णु खु', 'किं नाम खलु'. ५ 'भवेद्', इत्यस्यानन्तरं '( विचिन्त्य ।) भवतु सखीवचनाद्व्यक्तिर्भविष्यति' इति बहुपुस्तकानां पाठः . ६ 'किं वि' ७ 'भअवदाणं बाह्मणाणं वि आसीसाए आहुदिहुदेण पज्जलिदेण भअवदा हुदासणेण अ णस्सदु' इति बहुषु पुस्तकेषु पाठः, कुत्रचिद् 'अणस्सदु' इत्यत्र 'अन्तरीअदु' इति पाठो वर्तते ८ एतदनन्तरं 'सर्वेल्स्वद्वयम् ।' इति क्वचित्कविवचनं दृश्यते ९ 'वचनकाथात्'

मां प्रे[1]त्याययितुं विमूढहृदयं दिष्ट्या कथान्त गता
मिथ्यादूषितयानया विरहितं दिष्ट्या न जातं जगत् ॥ १३ ॥

**भा[2]नुमती**—हला, कहेहि किं एत्थ पसत्थं किंवा असुहसूअअ त्ति । (क)

**सखी चेटी च**—(अन्योन्यमवलोक्य । अपवार्य ।) एत्थ णत्थि त्थोअ वि सुहसूअअम् । त[3]दा अलिअं कधअन्ती पिअसहीए अवराहिणी भविस्सम् । सो दा[4]णीं सिणिद्धो जणो जो पुच्छिदो परुसं वि हिद भणादि (प्रकाशम्) सहि, सव्व ज्जेव एद असुहणिवेदणम् । ता देवदा पणामेण [5]दुंजादिजणपडिग्गहेण अ अन्तरीअदु । णहु दाढिणो ण[6]उलस्स वा दसणं अहिसदवहं अ सिविणए पससन्ति विअक्खणाओ । (ख)

**राजा**—अवितथमाह सुवदना । नकुलेन पन्नगशतवधः स्तनांशुका[8]पहरणं च नियतमनि[9]ष्टोदर्कं तर्कयामि ।

पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः ।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥ १४ ॥

---

(क) हला कथय किमत्र प्रशस्तं किं वाशुभसूचकमिति ।

(ख) अत्र नास्ति स्तोकमपि शुभसूचकम् । ततोऽलीकं कथयन्ती प्रियसख्या अपराधिनी भविष्यामि । स इदानीं स्निग्धोजनो यः पृष्टः परुषमपि हि भणति । सखि, सर्वमेवैतदशुभनिवेदनम् । तद्देवतानां प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तर्यताम् । न खलु दंष्ट्रिणः नकुलस्य वा दर्शनमहिशतवधं च स्वप्ने प्रशंसन्ति विचक्षणाः ।

---

१. 'प्रत्यापयितुम्' २. 'हला, कहेहि किं एत्थ सुहसूअअ, इति बहुपुस्तकपाठः ३. 'जइ एत्थ अलीअ कहइस्सं ता अवराहिणी भविस्सम्' इति बहुपुस्तकानां पाठः. ४. 'एव्व.' ५ 'दुव्वादिपडिग्गहेण'. ६ 'णउलस्स अण्णहस इति क्वचित्पाठः. ७. 'वि'. ८. 'स्तनांशुकाहरणमिति'; 'स्तनांशुकाहरणं च ९. 'अरिष्टोदर्कमस्माकं तर्कयामि' इति क्वचित्पाठः

(वामाक्षिस्पन्दनं सूचयित्वा ।) आः ममापि नाम दुर्योधनस्यानिमित्तानि हृदयक्षोभमावहन्ति । (सावष्टम्भम् ।) अथवा भीरुजनहृदयप्रकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु । गीतश्चायमर्थोऽङ्गिरसा ।

ग्रहाणां चरितं स्वप्नोऽनिमित्तौत्पातिकं तथा ।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ १५ ॥

भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि ।

**भानुमती**—हला सुवअणे, पेक्ख दाव उदअगिरिसिहरन्तरविअरहवरो विअलन्तसंझाराअपसण्णदुरालोअमण्डलो जादो भअवं वहणाहो । (क)

**सखी**—सहि, रोसाणिदकणअपत्तसरिसेण लदाजालन्तरापडिदकिरणनिवहेण पिञ्जरिदोज्जाणभूमिभाआ पूरिदपडिण्णो विअ रिउदुप्पे-

(क) हला सुवदने, पश्य तावदुदयगिरीशिखरान्तरविमुक्तरथवरो विगलत्संरागप्रसन्नदुरालोकमण्डलो जातो भगवान्दिवसनाथः ।

१. 'आः कथं'. २. 'आवेदयन्ति'. ३. 'कम्पनेषु'. ४. 'एवंविधेषु कश्मलेषु' क्वचित्पाठः. ५. 'निमित्तान्यौत्पातिकाः'; 'अनिमित्तान्युपयाचितम्'; 'निमित्तोत्पादकम्'. ६. 'पेक्ख दाव' इति क्वचिन्नास्ति. ७. 'सिहरन्तरित.' ८. 'विअलन्तसञ्झाराओ आमग्गदुरालोअमण्डलो'; 'विअलिअसंझाराअप्पसण्णदुरालोअमण्डलो'. ९. 'सहि' १०. 'रोमाञ्चिदकण्णकन्तिमास्सिरीएण'; 'रोमाञ्चिदकणअकन्तिसस्सिरीएण;' 'माणिदकणअरओसरिसेण'; 'रोसरञ्जिदकणअरसरिसेण'; 'कणअरओसरिसेण' इति नानाविधः पाठः. ११. 'लदाजालन्तरिद किरणजालेण'. १२. 'पिसङ्गीकिदोज्जाणभूमिभाओ'. १३. 'पूरिदपडिण्णो' इति क्वचिन्नास्ति. १४. 'दुप्पेक्खणिज्जो'

क्खणिओ जादो भवअ सहस्सकिरणो । ता समओ दे कुसुमचन्दण गब्भेण अग्घेण पज्जुवट्ठादुम् । (क)

**भानुमती**—हञ्जे तरलिए, उवणेहि मे अग्घभाअण जाव भअवदं सहस्सरस्सिणो सवरिअ णिव्वट्टेमि । (ख)

**चेटी**—जं देवि आणवेदि । (इति निष्क्रान्ता ।) (ग)

**राजा**—अयमेव साधुतरोऽवसरः समीपमुपगन्तु देव्याः ।

---

(क) सखि, रोसानितकनकपत्रसदृशेन लताजालान्तरापतितकिरणनिवहे पिञ्जरितोद्यानभूमिभाग॰ पूरितप्रतिज्ञ इव रिपुदु॰प्रेक्षणीयो जातो भगवान्सहस्रकि रणः । तत्समयस्ते कुसुमचन्दनगर्भेणार्घेण पर्युपस्थातुम् ।

(ख) हञ्जे तरलिके, उपनय मेऽर्घ्यभाजनं यावद्भगवत॰ सहस्ररश्मेः सप निर्वर्तयामि ।

(ग) यद्देव्याज्ञापयति ।

---

१. 'भअव सहस्सरस्सी संवुत्तो'. २. 'लोहिदचन्दणकुसुमगब्भेण ३. 'सहस्सकिरणस्स'. ४. (इति निष्क्रम्य पुन॰ प्रविश्य ।) भट्टिणि, । अग्घभाअणम् । णिव्वट्टेदु भअवदो सहस्सरस्सिणो सवरिअम् । राजा—अयं साधुतरोऽवसरः प्रियासमीपमुपगन्तुम् । (इत्युपसर्पति ।) सखी—(विलोक्यात गतम् ।) एद्द महाराओ आअदो । हन्त, जादो से णिअमभङ्गो । भानुमती॰ (दिनकराभिमुखीभूत्वा ।) भअव अम्बरमहासरेक्कसहस्सपत्त पुव्वदिसावहूमु मण्डणकुसुमविसेसअ सअलभुवणेक्करअणप्पदीव जं एत्थं सिविणअदंसणे कि अमादिद तं भअवदो पणामेण सम्भादुअस्स अज्जउत्तस्स कुसलपरिणामी होदु (अर्घ्यं दत्त्वा ।) हञ्जे तरलिए, उवणेहि मे पुणोवि कुसुमाइ अवराणं वि देवद सवरिअ णिव्वट्टइदुम् । (इति हस्तौ प्रसारयति । राजा संज्ञया परिजनमुत्स पुष्पाणि स्वयमुपनयति । स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति च भानुमती—(सरोषम् ।) अहो पमादो परिअणस्स ।(परिवृत्य दृष्ट्वा । ससम्भ्रमम् कधं अज्जउत्तो ।' इति पृथग्विध पाठः

(प्रविश्य।)

चेटी—देवि, एद अग्घभाअणम्। ता णिव्वट्टीअदु भअवदो सहस्सरस्सिणो सवरिआ। (क)

(राजोपसृत्य संज्ञया परिजनमुत्सार्य स्वयमेवार्घ्यपात्रं गृहीत्वा ददाति।)

सखी—(स्वगतम्।) कहं महाराओ समाअदो। हन्त, किदो से पेअसहीए णिअमभङ्गो रण्णा। (ख)

भानुमती—(दिनकराभिमुखी भूत्वा।) भअवं, अम्बरमहासरेक्कसहस्सपत्त, पुव्वदिसावहूमुहमण्डलकुङ्कुमविसेसअ, सअलभुवणाङ्गणदीवअ, एत्थ सिविणअदंसणे जं किं वि अच्चाहिदं त भअवदो पणामेण कुसलपरिणामी ससदभादुअस्स अज्जउत्तस्स होदु। (अर्घ्यं दत्त्वा।) हला, उवणेहि मे कुसुमाइं जाव अवराणं वि देवदाणं सवरिअं णिव्वत्तेमि। (हस्तौ प्रसारयति।) (ग)

(राजा पुष्पाण्युपनयति। स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति।)

---

(क) देवि, एतदर्घ्यभाजनम्। तन्निर्वर्त्यतां भगवतः सहस्ररश्मेः सपर्या।

(ख) कथं महाराजः समागतः। हन्त, कृतोऽस्याः प्रियसख्या नियमभङ्गो राज्ञा।

(ग) भगवन्, अम्बरमहासरएकसहस्रपत्र, पूर्वदिशावधूमुखमण्डलकुङ्कुमविशेषक, सकलभुवनाङ्गनदीपक, अत्र स्वप्नदर्शने यत्किमप्यत्याहितं तद्भगवतः प्रणामेन कुशलपरिणामि सशतभ्रातृकस्यार्यपुत्रस्य भवतु। हला, उपनय मे कुसुमानि यावदपरासामपि देवतानां सपर्यां निर्वर्तयामि।

---

१. '(दिनकराभिमुखीभूय।)' २. 'मण्डण' ३. राज्ञः पुष्पाण्युपनयतः (स्पर्शोद्धस्तादर्घ्यपात्रं भूमौ पतति।) इति क्वचित्पाठः; '(दुर्योधनः पुष्पाण्युपनयति। भानुमत्याः—स्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति।)' इत्यपि क्वचित्पाठो दृश्यते।

**भानुमती**—(सरोषम् ।) अहो पमादो परिअणस्स । (पार्श्वे दृष्ट्वा । ससंभ्रमम् ।) कधं अज्जउत्तो । (क)

**राजा**—देवि, अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे । तत्प्रभवत्यनुशासने देवी ।

( भानुमती लज्जां नाटयति । )

**राजा**—अयि प्रिये,

[२] विकिर धवलदीर्घापाङ्गससर्पि चक्षुः
परिजनपथवर्तिन्यत्र किं संभ्रमेण ।
स्मितमधुरमुदारं देवि[३] मामालपोच्चैः
प्रभवति[४] मम पाण्योरञ्जलिः सेवितुं त्वाम् ॥ १६ ॥

**भानुमती**—अज्जउत्त, अब्भणुण्णादाए तुए अत्थि मे कस्सिं णिअमे अहिलासो । (ख)

**राजा**—श्रुतविस्तर एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति । तदलं प्रकृतिसुकुमारमात्मानं खेदयितुम् ।

(क) अहो प्रमादः परिजनस्य । कथमार्यपुत्रः ।

(ख) आर्यपुत्र, अभ्यनुज्ञातायास्त्वयास्ति मे कस्मिन्नपि नियमेऽभिलाषः

१. '(परिवृत्य, राजानमवलोक्य, ससाध्वसं लज्जां नाटयति ।)' इति प २. 'तथा प्रभवति' .३. '(भानुमती लज्जां नाटयति ।)' इति क्वचिन्नास्ति. 'मीद'. ५.' प्रभवति मम पाण्योरञ्जलिस्त्वं स्पृशास्मान्' इति पाठः ४. 'अ णुजाणादु मं महा राओ । अत्थि मे' इति बहुपुस्तकाना पाठः. ५. 'तदलं प्रकृ सुकुमारमात्मानम्'; 'तदलमेनं प्रकृतिसुकुमारमात्मानम्'; 'तदलमेव प्रकृतिसु मात्मानम्', 'तदलं प्रकृतिसुकुमारमेवात्मानम्' इति नानाविधः पाठः.
।

**भानुमती**—अज्जउत्त, मे सङ्का वाहेइ। ता अणुमण्णदु मं अज्जउत्तो (क)

**राजा**—(सगर्वम्।) देवि, अलमनया शङ्कया। पश्य।

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि।
भीरु भ्रातृशतस्य या भुजवनच्छायासुखोपस्थिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ॥ १७ ॥

**भानुमती**—अज्जउत्त, णँ हु मे किं वि आसङ्काकालणं तुह्मेसु संणिहिदेसु। किंतु अज्जउत्तस्स एव्व मणोरहसंपत्तिं अहिणन्दामि। (ख)

**राजा**—अयि सुन्दरि, एतावन्त एव मनोरथा यदहं दयितया संगतः स्वेच्छया विहरामीति। पश्य।

प्रेमाबद्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथं मन्दमन्दस्मितं वा।
वक्त्रेन्दुं ते नियममुषिताऌक्तकाग्राधरं वा
पातुं वाञ्छा परमसुलभं किं नु दुर्योधनस्य ॥ १८ ॥

---

(क) आर्यपुत्र, मां शङ्का बाधते। तदनुमन्यतां मामार्यपुत्रः।

(ख) आर्यपुत्र, न खलु मे किमप्याशङ्काकारणं युष्मासु संनिहितेषु। किंत्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि।

---

१. 'अज्जउत्त, अदिमेत्तं मे संका बाहेइ' इति पाठः. २ 'मे भुजवनच्छायासुखोपास्थिता' इत्यपि पाठः. ३. 'ण हि किं वि मे संकाकालणम्' इति बहुपुस्तकानां पाठः. ४ 'एव्वं;' 'ज्जेव'. ५. यदहं, वनितया संगतः'; 'यदहं समागतस्त्वया'. ६. 'प्रेमावस्थ–', 'प्रेमाबन्ध–'. ७. 'नियत मुषितालक्तकाग्राधरं'; 'नियममुषितालक्तकांकाधरं'; 'नियममुषिताक्तताग्राधरं' ८. 'तु'; 'न.'

( नेपथ्ये महान्कलकलः । सर्वे आकर्णयन्ति ।)

**भानुमती**—(सभयं राजानं परिष्वज्य ।) परित्ताअदु परित्ताअदु अ ज्जउत्तो । (क)

**राजा**—(समन्तादवलोक्य ।) प्रिये, अलं सम्भ्रमेण । पश्य ।

दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांशुदण्डोऽन्तरिक्षे
झाङ्कारी शर्कराल: पथिषु विटपिनां स्कन्धकाषैः सधूमः ।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु किं सम्भ्रमेण ॥ १९॥

**सखी**—महाराओ पविसदु एव दारपव्वअप्पासादम् । उव्वेअकारी क्खु अअं उत्थिदपरुसरअकलुसीकिदणअणो उम्मूलिदतरुवरसद्दवित्तत्थ-मन्दुरापरिब्भट्टवल्लहतुरङ्गमपज्जाउलीकिदजणपद्धइ भीसणो समीरणो । (ख)

**राजा**—(सहर्षम् ।) उपकारि खल्विदं वात्याचक्रं सुयोधनस्य । यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या संपादितोऽस्मन्मनोरथः । कथमिति ।

---

(क) परित्रायतां परित्रायतामार्यपुत्रः ।

(ख) महाराज प्रविशत्वेव दारुपर्वतप्रासादम् । उद्वेगकारी खल्वयमुत्थितः परुषरजःकलुषीकृतनयनः उन्मूलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्याकुलीकृतजनपद्धतिर्भीषणः समीरणः ।

---

१. 'सभयं' इति क्वचिन्नास्ति २. 'व्याक्षिप्तपर्णं' 'व्यूढाङ्घ्रिपादः'. ३. महाराअ, आरोहीअदु.' ४. 'उच्छेअकारी' ५ 'उत्थिदो परुसरअ-', 'उद्धूदपांसु पसरो' ६. 'विदलिदतरुवर-' 'तुरङ्गमो. ८ 'समीरणासारो'. ९ '(सहर्षम्) इति क्वचिन्नास्ति

न्यस्ता न भ्रुकुटिर्न बाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः ।
तन्व्या मग्नपयोधरं भयवशादाबद्धमालिङ्गितं
भङ्क्त्वास्या नियमस्य भीषणमलान्नायं वयस्यो मम ॥ २० ॥

संपूर्णमनोरथस्य मे कामचारः संप्रति विहारेषु । तदितो दारुपर्वतमेव गच्छामः ।

(सर्वे वात्यावाधां रूपयन्तः परिक्रामन्ति । )

**राजा—**

[...]र्ह वनोरु पदानि शनैः शनैरपि विमुञ्च गतिं परिवेपिनीम् ।
[...]नु बाहुलतोपनिबन्धनं मम निपीडय गाढमुरःस्थलम् ॥ २१ ॥

[...]वेशं रूपयित्वा ।) प्रिये, अलब्धावकाशः समीरणासारः स्तिमितत्वाद्गृहस्य । विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम् ।

**भानुमती—**(सहर्षम् ।) दिट्ठिआ इह दाव दुप्पादसमीरणो ण बाधेइ । (क)

**सखी—**आरोहणसंभमणिस्सहं पिअसहीए ऊरुजुअलम् । ता कीस [दा]णीं महाराओ आसणवेदीं ण भूसेदि । (ख)

(क) दिष्ट्येह तावद्दुत्पातसमीरणो न बाधते ।

(ख) आरोहणसंभ्रमनिःसहं प्रियसख्या ऊरुयुगलम् । तत्कस्मादिदानीं महा[रा]ज आसनवेदीं न भूषयति ।

१. 'भुग्नपयोधरं'; 'लग्नपयोधरं'. २. 'आरब्धमालिङ्गितुम्'. ३. 'नु मे'. [४]. दारुपर्वतप्रासादमेव. ५. '(वात्यावाधां रूपयन्तो यत्नतः परिक्रामन्ति ।)' [इत्य]पि पाठः. ६. 'अपि'. ७. 'पतसि'. ८. बाहुलतोपरिबन्धनं.' ९. 'लब्धान्तरः [स]मीरणः संवृतत्वाद्भङ्गगृहस्य'; 'अलब्धावकाशः समीरणः संवृतत्वाद्भङ्गगृहस्य'. [१]०. 'दिट्ठिआ दुप्पादसमीरणासारो ण बाधेइ' इति पाठः. ११. 'आरोहण—' [इ]त्यस्मात्पूर्वम् 'महाराअ' इत्यधिकः पाठो बहुपुस्तकेषु दृश्यते. १२. 'अणुभूसेदि'.

**राजा**—( देवीमवलोक्य । ) भवति, अनल्पमेवापकृत या यासभ्रमेण । तथाहि ।

रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा
दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुर क्षितहारं दुनोति ।
ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वपथुर्वर्धतेऽस्या
वात्या खेद कृशाङ्ग्या सुचिरमवयवैर्दूरमाविष्करोति ॥ २२ ॥

( सव उपविशति । )

**राजा**—तत्किमित्यनास्तीर्णे कठिनशिलातलमध्यास्ते देवी ।

लीलाशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य
अध्यासितुं तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु ममारुयुग्मम् ॥ २३ ॥

(प्रविश्य पटाक्षेपेण सम्भ्रान्त ।)

**कञ्चुकी**—देव, भग्न भग्नम् ।

( सर्वे साकूत पश्यन्ति । )

**राजा**—केन ।

**कञ्चुकी**—भीमेन ।

**राजा**—कस्य ।

---

१ 'तनोति २ मृगाक्ष्या ३ 'अवयवैदत्तहस्ता करोति ४ 'कठिन शिलातलम् ५.'देवी इत्यस्मादन तर'यतः इत्यधिक क्वचित्पाठ ६ 'चिरात्' ७ 'सातङ्कम् 'सभयम् ८ 'किं नाम' ९ 'कञ्चुकी—देव, भग्न भीमेन' 'कञ्चुकी—देव, भीमेन इति वा पाठ १० 'भीमेन' इत्येतस्मादनन्तर 'राजा आ, किं प्रलपसि । भानुमती—अज्ज, किं अण्णं मन्तेसि । कञ्चुकी (सभयम् ।) देव, कथयामि सर्वम् । भग्न भीमेन भवतो महता एवंविध केषुचि पुस्तकेषु पाठो दृश्यते

**कंचुकी**—भवत ।

**राजा**—आ, किं प्रलपसि ।

**भानुमती**—अज्ज, किं अणिट्ठ मन्तेसि । (क)

**राजा**—धिक्प्रलापिन्, वृद्धापसद कोऽयमद्य ते व्यामोह ।

**कंचुकी**—देव, न खलु कश्चिद्व्यामोह । सत्यमेव ब्रवीमि ।

भग्न भीमेन भवतो मरुता रथकेतनम् ।
पतित किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥ २४ ॥

**राजा**—बलवत्समीरणवेगात्कम्पिते भुवने भग्न स्यन्दनकेतु । तत्किमित्युद्धत प्रलपसि भग्न भग्नमिति ।

**कंचुकी**—देव न किंचित् । किंतु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति ।

**भानुमती**—अज्जउत्त, अन्तरीअदु एद पसण्णब्रह्मणवेअघोसेण (ख)

**राजा**—(सावज्ञम् ।) ननु गच्छ । पुरोहितसुमित्राय निवेदय ।

**कंचुकी**—यदाज्ञापयति देव । (इति निष्क्रान्त ।)

(प्रविश्य)

**प्रतीहारी**—(सोद्वेगमुपसृत्य ।) जअदि जअदि महाराओ । महाराअ,

---

(क) आर्य किमनिष्ट मन्त्रयसे ।

(ख) आर्यपुत्र, अन्तर्यतामेतत्प्रसन्नब्राह्मणवेदघोषेण ।

---

१ यदि 'बलवत्समीरणयोगात्' इत्यपि पाठ २ 'अज्जउत्त, पडिहरीअदु एद अणिमित्त पसण्णबम्हणवेअणुघोसेण होमेण अ' इति बहुपुस्तकाना पाठ, 'पसण्णबह्मणवअणमङ्गलवअणसमुग्घोसेण' इत्यपि क्वचित्पाठ ३ 'किंतु सूतपुरोहिताय सुमित्राय निवेदय' इति पाठ ४ 'जअदु जअदु महाराओ । महाराअ, एसा क्खु जामादुणो सिन्धुराअस्स मादा दुस्सला अ पडिहारभूमीए चिट्ठदि' इति बहुपुस्तकाना पाठ

महादेवी क्खु एसा सिंधुराअमादा दुस्सला अ पडिहारभूमीए चिट्ठदि। (क)

**राजा**—(किंचिद्विचिन्त्यो मगतम्।) किं जयद्रथमाता दुःशला चेति। कच्चिदभिमन्युधामर्षितैः पाण्डुपुत्रैर्न किंचिदत्याहितमाचेष्टितं भवेत्। (प्रकाशम्।) गच्छ। प्रवेशय शीघ्रम्।

**प्रतीहारी**—जं देवो आणवेदि। (इति निष्क्रान्ता।) (ख)

(ततः प्रविशति सम्भ्रान्ता जयद्रथमाता दुःशला च।)

(उभे सास्रं दुर्योधनस्य पादयोः पततः।)

**माता**—परित्ताअदु परित्ताअदु कुमालो। (ग)

(दुःशला रोदिति।)

**राजा**—(ससम्भ्रममुत्थाप्य।) अम्ब, समाश्वसिहि समाश्वसिहि। किमत्याहितम्। अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य।

**माता**—जाद, कुदो कुसलम्। (घ)

**राजा**—कथमिव।

---

(क) जयति जयति महाराजः। महाराज, महादेवी खल्वेषा सिंधुराजमाता दुःशला च प्रतिहारभूमौ तिष्ठति।

(ख) यद्देव आज्ञापयति।

(ग) परित्रायतां परित्रायतां कुमारः।

(घ) जात कुतः कुशलम्।

---

१ '(स्वगतम्।)' २ 'क्वचित्' ३ 'महाराओ' ४ 'कुरुणाहो' ५ उत्थाय ६ 'कुदो एव कुसलम्' ७ 'कथमिव' इत्यत्र 'राजा—अम्ब, किं जातम्' इति क्वचित्पाठः

**माता**—( साशङ्कम् । ) अज्ज क्खु [1]पुत्तवहामरिसिदेण गण्डीविणा अणत्थमिदे दिवहणाहे तस्स वहो पडिण्णादो । (क)

**राजा**—( सस्मितम् । )इदं [2]तदश्रुकारणमम्बाया दुःशलायाश्च । पुत्रशोका[3]दुन्मत्तस्य किरीटिनः प्रलापैरेवमवस्था । अहो मुग्धत्वमबलानां [4]नाम । [5]अम्ब कृतं विषादेन । वत्से दुःशले, अलमश्रुपातेन । कुतश्चायं [6]तस्य धनंजयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम् ।

**माता**—[7]जाद, जाद, दे हि पुत्तबन्धुवहामरिसुद्दीविदकोवाणला [8]अणपेक्खिदसरीरा वीरा परिक्कामन्ति । (ख)

**राजा**—( सोपहासम् । )एवमेतत् । सर्वजन[9]प्रसिद्धैवामर्षिता पाण्डवानाम् । पश्य ।

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम [10]राजचक्रपुरतो गौर्गौरिति व्याहृता ।
तस्मिन्नेव स [11]किं नु गाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥ २५ ॥

---

(क) अद्य खलु पुत्रवधामर्षितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः ।

(ख) जात, जात, ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिक्रामन्ति।

---

१. ' पुत्तवहामरिसुद्दीविदेण'. २. 'अश्रुकारणम्'. ३. 'उत्तप्तस्य'. ४. 'नाम इति क्वचिन्नास्ति. ५ 'अम्ब' इति क्वचिन्नास्ति ६., अस्य'. ७. 'जाद, जदो अ बन्धुवहामरिसुद्दीविदकोवाणला' इति पाठः. ८. 'अणवेक्खिदसरीरा'; 'अणवेक्खिदसरीरावरणा'. ९. 'प्रसिद्धमेवामर्षित्वम्'. १०. 'राजचक्रमभित-'; 'राजचक्रसमितौ'. ११. 'ततज्यकार्मुकधरः'; 'ततज्यगाण्डिवधरः'.

**माता**—असमत्तपडिण्णाभारस्स आप्पवहो से पडिण्णादो। (ग)

**राजा**—यद्येवमस्मानन्दस्थानेऽपि ते विषादेन। ननु वक्तव्यमुत्सन्न सानुजो युधिष्ठिर इति। अन्यच्च मात, का शक्तिरस्ति धनंजयस्यान्यस्य वा कुरुशतपरिवारवर्धितमहिम्न कृपकर्णद्रोणाश्वत्थामादिमहारथपराक्रम-द्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य। अयि सुतपराक्रमानभिज्ञे,

धर्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन।
एकोऽपि विस्फुरितमण्डलचापचक्रं
कः सिन्धुराजमभिषेणयितुं समर्थः ॥ २६ ॥

**भानुमती**—अज्जउत्त, जहवि एव्व तहवि गुरुकिदपडिण्णाभारो ट्ठाण क्खु सङ्काए। (ख)

**माता**—साहु, कालोइदं भणिअं भाणुमदीए। (ग)

**राजा**—आः ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः। पश्य।

कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः

---

(क) असमाप्तप्रतिज्ञाभारस्यात्मवधोऽस्य प्रतिज्ञातः।

(ख) आर्यपुत्र, यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभारः स्थानं खलु शङ्कायाः।

(ग) साधु, कालोचितं भणितं भानुमत्या।

---

१ 'असमत्तपडिण्णाभरेण आप्पवहो तेण पडिण्णादो' 'जाद, असमत्तीए पडिण्णाभारस्स आप्पवहो से पडिण्णादो' इति पाठान्तरे २ 'ननु व्यक्तं वक्तव्यम्' ३ 'अन्यच्च' इति क्वचिन्नास्ति ४ 'न' ५ 'पराक्रम' इति क्वचिन्नास्ति. ६ 'गुरुकिदपडिण्णाभारो धनजयो त्ति ण ट्ठाण' गुरुकिदपडिण्णाभर धनजओ णिदाण क्खु सङ्काए ७ 'जादे, साहु, कालोइदं तुए मन्तिदम्, इति पाठः ८. 'ज्यातन्त्रै' ९, कङ्कटामुक्तदेहै', 'कङ्कटाबद्धदेहै'

श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः ।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलाना-
माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः संपतन्ति ॥ २७ ॥

अपि च भानुमति, विज्ञातपाण्डवप्रभावे, किं त्वमप्येवमाशङ्कसे । पश्य

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च तथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधेऽपि यथा प्रतिज्ञा ॥ २८ ॥

कः कोऽत्र भोः । जैत्रं मे रथमुपकल्पय तावत् । यावदहमपि तस्य प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितमशस्त्रपूतं मरणमुपदिशामि ।

(प्रविश्य ।)

**कंचुकी**—देव,

उद्घातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः ।
सज्जोऽयं नियमितवल्गिताकुलाश्वः
शत्रूणां क्षपितमनोरथो रथस्ते ॥ २९ ॥

**राजा**—देवि, प्रविश त्वमभ्यन्तरमेव । ('यावदहमपि तस्य प्रगल्भपाण्डवस्य'—इत्यादि पठन्परिक्रामति ।)

(इति निष्क्रान्ताः सर्वे ।)

## इति द्वितीयोऽङ्कः ।

---

१. 'ध्वस्तार्कभासाम्'. २. 'चमूनाम्'. ३. 'अयि भानुमति'. ४. 'अविज्ञातपाण्डवप्रभावे'. ५. 'आशङ्कसे'. ६. 'उपपादय' ७ 'तस्य मिथ्याप्रतिज्ञाप्रगल्भस्य पाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितम्'; 'तस्य प्रगल्भपाण्डवस्य मिथ्याप्रतिज्ञावैलक्ष्यंपादयन्', 'तस्याप्रगल्भमिथ्याप्रतिज्ञावैलक्ष्यसंपादितम्' इति पृथग्विधः पाठः. ८. 'वल्गुवल्गिताश्वः' इति पाठः. ९. 'पठित्वा' इति पाठः.

## तृतीयोऽङ्कः।

(तत प्रविशति विकृतवेषा राक्षसी ।)

**राक्षसी**—( विकृत विहस्य । सपरितोषम् । )

हदमाणुशमशभालए कुम्भशहश्शवशाहि शंचिए ।

अणिश अ पिवामि शोणिअ वलिशशद शमले हुवीअदु ॥ १ ॥

( नृत्यन्ती सपरितोषम् । ) जइ शिन्धुलाअनहदिअहे विअ दिअहे दिअहे शमलकम्म पडिवज्जइ अज्जुणे तदो पज्जत्तभलिदकोट्ठागाले मशशोणिएहिं मे गेहे हुवीअदि । ( परिक्रम्य दिशोऽवलोक्य । ) अह कहिं क्खु गदे मे लुहिलप्पिए हुवीअदि । होदु । शद्दावइश्श दाव । अले लुहिलप्पिआ लुहिलप्पिआ, इदो एहि । (क)

( तत प्रविशति तथाविधो राक्षस । )

**राक्षसः**—( श्रम नाटयन् । )

---

(क) हतमानुषमांसभारके कुम्भसहस्रवसाभि सञ्चिते ।
अनिश च पिबामि शोणित वर्षशत समरो भवतु ।
यदि सिन्धुराजवधदिवस इव दिवसे दिवसे समरकर्म प्रतिपद्यतेऽर्जुनस्तत पर्याप्तभरितकोष्ठागारं मासशोणितैर्मे गृह भविष्यति । अथ क खलु गतो मे रुधिरप्रियो भविष्यति । भवतु । शब्दापयिष्ये तावत् । अरे रुधिरप्रिय रुधिरप्रिय, इत एहि ।

---

१ 'शोणिदेहिं', 'भोअणे', 'भक्खणे' २. 'कुम्भशहश्श वशाहिं शचिदम्', 'इभशहश्शवशाशशचिए' इति पाठौ ३ '(इति नृत्यन्ती सपरितोषम् । )', ४ 'दिअहे दिअहे' इति क्वचिन्नास्ति ५ 'शमल' ६ 'अपज्जत्त–' 'अज्जत्त–' ७ 'कहिं णु लुहिलप्पिए हुवीअदि । ता जाव इमश्शि शमले पिअभत्ताल लुहिलप्पिअ अण्णेशामि । (परिक्रम्य । ) होदु शद्दावइश्श दाव । लुहिलप्पिआ लुहिलप्पिआ, इदो एहि इदा एहि' इति बहुपुस्तकानां पाठ ८. (श्रमम नाटयन्।)'

पच्चग्गहदाणं मंशए जइ उण्हे लुहिले अ लब्भइ ।
ता एशे मह पलिश्शमे क्खणमेत्तं एव्व लहु णश्शइ ॥ २ ॥ (क)

( राक्षसी पुनर्व्याहरति । )

**राक्षसः**—(आकर्ण्य ।) अले [1]के मं शद्दावेदि । ( विलोक्य । ) [2]कहं पिआ मे वशागन्धा । (उपसृत्य ।) वशागन्धे, कीश मं शद्दावेशि ।

[4]लुहिलाशवपाणमत्तिए लणहिण्डन्तखलन्तगत्तिए ।
शद्दाअशि कीश मं पिए पुलिशशहश्शं हदं शुणीअदि ॥ ३ ॥ (ख)

**राक्षसी**—[5]अले लुहिलप्पिआ, एदं क्खु [6]मए तुह कालणादो पच्चग्गहदश्श [7]कश्शवि लाएशिणो प्पहूदवशाशिणेहचिक्कणं कोण्हं णवलुहिलं अग्गमंशं अ आणीदम् । ता पिवाहि णम् । (ग)

---

(क) प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरं च लभ्येत ।
तदेष मम परिश्रमः क्षणमात्रमेव लघु नश्येत् ॥

(ख) अरे का मां शब्दायते । कथं प्रिया मे वसागन्धा । वसागन्धे, कस्मान्मां शब्दायसे ।

रुधिरासवपानमत्ते रणहिण्डनस्खलद्गात्रि ।
शब्दायसे कस्मान्मां प्रिये पुरुषसहस्रं हतं श्रूयते ॥

(ग) अरे रुधिरप्रिय, इदं खलु मया तव कारणात्प्रत्यग्रहतस्य कस्यापि राजर्षेः प्रभूतवसास्नेहचिक्कणं कोष्णं नवरुधिरमग्रमांसं चानीतम् । तत्पिबैतत् ।

---

१. '(श्रुत्वा ।)'. २. 'के एशे मं'. ३. 'अले, कहं वशागन्धा' इति बहुपुस्तकानां पाठः. ४. लुहिलाशवपाणमत्तिए-' इत्यादि पाठः केषुचित्पुस्तकेषु न वर्तते. ५. अले इति क्वचिन्नास्ति. ६. 'मए' इति क्वचिन्नास्ति. ७. 'कश्शवि लाएशिणो शलीलावअवप्पहूदं प्पहूदवशाशिणेहचिक्कणं'; 'कश्शवि रिउवग्गाहदश्श विलाशिणो प्पहूदवशाशिणेहमश्थिकचिक्कणं' इति वा पाठः. ८. 'लुहिलं'.

**[1]राक्षस**—(सपरितोषम् ।) वशागन्धे, शुट्ठु शोहण तुए किदम् । बलिअम्हि पिवाशिए । ता उवणेहि । (क)

**राक्षसी**—[2]अले लुहिलप्पिआ, एदिशे [3]वि णाम हदणलगअतुलङ्गमशोणिअवशाशमुद्दुस्शाचले [4]शमले पडिब्भमत्ते तुम पिवाशिएशित्ति अच्चलिअम् अच्चलिअम् । (ख)

**[5]राक्षसः**—अइ शुत्थिदे, ण पुत्तशोअशन्तत्तहिअअ शामिणीं हिडिम्बादेवीं [6]पेक्खिदु गदम्हि । (ग)

**राक्षसी**—लुहिलप्पिआ, अज्जवि शामिणीए हिडिम्बादेवीए घडुक्कअशोए ण उपशमइ । (घ)

---

(क) वसागन्धे, सुष्ठु शोभनं त्वया कृतम् । बलवदस्मि पिपासित तदुपनय ।

(ख) अरे रुधिरप्रिय ईदृशेऽपि नाम हतनरगजतुरङ्गमशोणितवसासमुद्रदु सचरे समरे परिभ्रमंस्त्व पिपासितोऽसीत्याश्चर्यमाश्चर्यम् ।

(ग) अयि सुस्थिते, ननु पुत्रशोकसंतप्तहृदयां स्वामिनीं हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि ।

(घ) रुधिरप्रिय, अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नोपशाम्यति ।

---

१ 'राक्षस —(सपरितोषम् ।) शाहु वशागन्धे, शाहु । शोहण तुए किद । वलिअह्मि पिवाशिए जक्कोशिण लुहिल आणीदम्' इति बहुपुस्तकानां पाठ, । केचित्तु 'राक्षस — वसागन्धे, शुट्ठु तुए किदम् । राक्षसी—अले, गेण्ह एद हत्थिककालम् । पिवाहि शोणिआशवम् । राक्षस —वलिअह्मि पिवाशिदो । ता उवणेहि' इत्येव पठन्ति २ 'अरे' इति क्वचित्पाठास्ति ३ 'वि णाम' इति क्वचिन्नास्ति ४ 'शमलङ्गणे' ५ 'राक्षस —( सक्रोधम् । ) अल वशागन्धे, पुत्तघडुक्कअशोअशन्तत्तहिअअ', 'राक्षस —( सक्रोधम् । ) अइ शुत्थिदे, पुत्तघडुक्कअशोअशन्तत्तहिअअ' इति वा पाठ ६. 'शमश्शाशइदु'.

**राक्षसः**—वशागन्धे, कुदो शे उवशमे । केवल अहिमण्णुशोअशमाणदुक्खाए शुभद्दादेवीए जण्णशेणीए अ कधं कध वि शमाश्शाशीअदि । (क)

**राक्षसी**—लुहिलप्पिआ, गेण्ह एद हत्थिशिलक्कवालशचिअ अग्गमंशोपदशम् । पिआहि शोणिआशवम् । (ख)

**राक्षसः**—( तथा कृत्वा । ) वशागन्धे, अह किंअप्पहूदं तुए शचिअ लुहिल अग्गमश अ । (ग)

**राक्षसी**—अले लुहिलप्पिआ, पुव्वशचिअ तुमं वि जाणाशि जेव्व । णवशचिअ शिणु दाव । भअदत्तशोणिएहिं कुम्भे शिन्धुलाअवशाहिं कुम्भे दुवे दुवदमच्छाहिवभूलिश्शवशोमदत्तवह्लीअप्पमुहाण णलिन्दाण

(क) वसागन्धे, कुतोऽस्या उपशम । केवलमभिमन्युशोकममानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथ कथमपि समाश्वास्यते ।

(ख) रुधिरप्रिय, गृहाणैतद्धस्तिशिर कपालसञ्चितमग्रमांसोपदशम् । पिब शोणितासवम् ।

(ग) वसागन्धे अथ कियत्प्रभूत त्वया सञ्चित रुधिरमग्रमास च ।

१ 'अह' २ 'किंतु अहिमण्णुवहशोअशमाणदुक्खाए' इति पाठ ३. 'शुभद्दादेवीए शम जण्णशेणीए कध वि शमाश्शाशीअदि', 'शुभद्दादेवीए जण्णशेणीए अ शमाश्शाशीअदि' इति वा पाठ ४ 'गेण्ह तुम एद' ५. 'णवशोणिआशवम्' ६ 'किअ पहुप्पहूद' ७ 'तुम जेव्व जाणाशि' ८ 'पच्चग्गशचिअ'. ९. 'दाव' इति क्वचिन्नास्ति १० 'शोणिअकुम्भे', 'शोणिदेहिं शदकुम्भे' ११. 'वशाकुम्भे दुवे, 'वशाहि कुम्भशदम्' १२ 'दुवद' इति क्वचिन्नास्ति. १३ 'भूलिश्शवअम्बाहिवशोमदत्त—' इति पाठ १४ 'णलिन्दाण पाकिदपुलिशाण अ लुहिलवशामदश्श घडा अणिदसुहा शहश्शशंखा शन्ति मे गेहे', 'णलिन्दाण घडशद अण्णाण वि पकिदपुलिशाण वशामदशोणिदेहिं पुलिद घडशाअश्शाइ बहुआइ अणेअशहश्शाइ शन्ति मे गेहे इति पाठौ.

अण्णाणं वि पाकिदपुलिशाणं लुहिलमशेहिं पुलिदाइं घडशदाइं अशंक्खाइ शन्ति मे गेहे। (क)

**राक्षसः**—(सपरितोषमालिङ्ग्य।) शाहु शुग्घलिणिए, शाहु। इमिणा दे शुग्घलित्तणेण अज्ज उण शामिणीए हिडिम्बादेवीए [1]शविहाणेण प्पणई मे जम्मदालिद्दम्। (ख)

**राक्षसी**—लुहिलप्पिआ, केलिशे शामिणीए शविहाणए किदे। (ग)

**राक्षसः**—वैशागन्धे, आणत्ते क्खु हग्गे शामिणीए हिडिम्बादेवीए जह लुहिलप्पिआ अज्जप्पहुदि तुए अज्जउत्तभीमशेणश्श पिट्ठदोऽणुपिट्ठं शमले आहिण्डिदव्व त्ति। ता तश्श अनुमग्गगामिणो हदमाणुशशोणिअणइदशणप्पणट्ठबुभुक्खापिवाशश्श इह एव्वमे शग्गलोओ हुवीअदि। तुम वि वीशद्धा भविअ लुहिलवशाहिं कुम्भशहश्शं शचेहि। (घ)

---

(क) अरे रुधिरप्रिय, पूर्वसंचितं त्वमपि जानास्येव। नवसंचितं शृणु तावत्। भगदत्तशोणितैः कुम्भः सिंधुराजवसाभिः कुम्भौ द्वौ द्रुपदमत्स्याधिपभूरिश्रवःसोमदत्तबाह्लीकप्रमुखानां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणां रुधिरमांसैः पूरितानि घटशतान्यसंख्यानि सन्ति मे गेहे।

(ख) साधु सुगृहिणि, साधु। अनेन ते सुगृहिणीत्वेनाद्य स्वामिन्या हिडिम्बादेव्याः सविधानेन प्रनष्टं मे जन्मदारिद्यम्।

(ग) रुधिरप्रिय, कीदृशं स्वामिन्या संविधानं कृतम्।

(घ) वसागन्धे, आज्ञप्तः खल्वहं स्वामिन्या हिडिम्बादेव्या यथा रुधिरप्रिय, अद्यप्रभृति त्वया आर्यपुत्रभीमसेनस्य पृष्ठतोऽनुपृष्ठं समरे आहिण्डितव्यमिति। तत्तस्यानुमार्गगामिनो हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव मे स्वर्गलोको भविष्यति। त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं सञ्चिनु।

---

१. 'शाहु शाहु शुग्घलिणीए, शाहु शाहु' इति पाठः. २. 'अज्ज उण' इति क्वचिन्नास्ति. ३ 'शविहाणेण अ प्पणट्ठे मे दालिद्दम्' इति पाठः. ४. 'अज्ज अहं शामिणीए हिडिम्बादेवीए शबहुमाणं शद्दाविअ आणत्ते। जह लुहिलप्पिआ अज्जप्पहुदि अज्जउत्तभीमशेणश्श' इति बहुपुस्तकानां पाठः. ५. 'अज्जउत्तदश्शभीमशेणश्श'.

**राक्षसी**—लुहिलप्पिआ, किंणिमित्तं कुमालभीमशेणश्श पिट्ठदो[1] आहिण्डीअदि । (क)

**राक्षसः**—वशागन्धे, तेण हि शामिणा [2]विओदलेण दुश्शाशणश्श लुहिलं पादुं पडिण्णादम् । तं च अह्मेहिं लक्खशेहिं अणुप्पविशिअ पादव्वम्[3] । (ख)

**राक्षसी**—(सहर्षम् ।) शाहु शामिणीए, शाहु । शुशंविहाणे मे भत्ता[4] किदे । (ग)

(नेपथ्ये महान्कलकलः ।)

**राक्षसी**[5]—(आकर्ण्य । ससंभ्रमम्[6] ।) अले लुहिलप्पिआ, किं णु क्खु एशे महन्ते कलअले शुणीअदि[7] (घ)

**राक्षसः**—(दृष्ट्वा ।) [8]वशागन्धे, एशे क्खु धिट्ठज्जुण्णेण दोणे केशेशु आकड्ढिअ अशिवत्तेण वावादीअदि । (ङ)

---

(क) रुधिरप्रिय, किंनिमित्तं कुमारभीमसेनस्य पृष्ठत आहिण्ड्यते ।

(ख) वसागन्धे, तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम् । तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यम् ।

(ग) साधु स्वामिनि, साधु । सुसंविधानो मे भर्ता कृतः ।

(घ) अरे रुधिरप्रिय, किं नु खल्वेष महान्कलकलः श्रूयते ।

(ङ) वसागन्धे, एष खलु धृष्टद्युम्नेन द्रोणः केशेष्वाकृष्यासिपत्रेण व्यापाद्यते ।

---

१. 'पिट्ठदोऽणुपिट्ठं'. २. 'विओदलेण वच्छत्थलदो दुश्शाशणश्श' इति क्वचित्पाठः. ३. 'पादव्वं त्ति'. ४. 'भत्ता तुए किदे' इति बहुपुस्तकानां पाठः. ५. एतदनन्तरं '(उभावाकर्णयतः ।)' इत्यधिकः पाठो बहुपुस्तकेषु दृश्यते. ६. 'ससंभमम्'. ७. 'शुणीअदि'. ८. 'हला वशागन्धे'.

**राक्षसी**—( सहर्षम् । ) लुहिलप्पिआ, एहि । गच्छिअ दोणश्श लुहिलं पिब्बह्ये । ( क )

**राक्षसः**—( सभयम् । ) वशागन्धे, बह्मणशोणिअं क्खु एदं गलअं दहन्ते दहन्ते पविशदि । ता किं एदिणा । ( ख )

( नेपथ्ये पुनः कलकलः । )

**राक्षसी**—लुहिलप्पिआ, पुणोवि एशे महन्ते कलअले शुणीअदि । ( ग )

**राक्षसः**—( नेपथ्याभिमुखमवलोक्य । ) वशागन्धे, एशे क्खु अश्शत्थामे आकड्ढिदाशिवत्ते इदो एव्व आअच्छदि । कदावि दुवदशुदलोशेण अम्हेवि वावादइश्शइ । तो एहि । अतिक्कमम्ह । ( घ )

इति निष्क्रान्तौ ।

प्रवेशकः ।

---

( क ) रुधिरप्रिय, एहि । गत्वा द्रोणस्य रुधिरं पिबावः ।

( ख ) वसागन्धे, ब्राह्मणशोणितं खल्वेतद्गलं दहद्दहत्प्रविशति । तत्किमेतेन ।

( ग ) रुधिरप्रिय, पुनरप्येष महान्कलकलः श्रूयते ।

( घ ) वसागन्धे, एष खल्वश्वत्थामाकृष्टासिपत्र इत एवागच्छति । कदाचिद्द्रुपदसुतरोषेणावामपि व्यापादयिष्यति । तदेहि । अतिक्रमावः ।

---

१. लुहिलप्पिआ, लुहिलप्पिआ, अह्ने वि गच्छिअ दोणश्श लुहिलं पिबह्म-इति बहुपुस्तकाना पाठ . २. एतदनन्तरं '( उभौतथा कुरुतः । ) राक्षसः—( किंचित्पीत्वा । ) वशागन्धे बह्मणशोणिअं क्खु एद' इति क्वचित्पाठो दृश्यते.' ३. 'दहन्ते पविशदि.' ४. 'ता एहि शामिणीए हिडिम्बादेवीए आणत्तिं कलेह्म' इतिबहुपुस्तकानां पाठ'.

( ततः प्रविशत्युत्कृष्टखङ्गः[1] कलकलमाकर्णयन्नश्वत्थामा । )

**अश्वत्थामा—**

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी[2] मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः[3] पुरः ॥ ४ ॥

(विचिन्त्य । ) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यावन्नदर्पा[4]दतिक्रान्तमर्यादेन परिकोपित[5]स्तातः । यतः[6] समुल्लङ्घ्य शिष्यप्रियतामात्मप्रभावसदृश[7]माचेष्टते । तथाहि ।

यद्दुर्योधनपक्षपातमदृशं युक्तं यदस्त्रग्रहे
रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य[8] यत्सांप्रतम् ।
लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं[9] क्रुधः[10]
प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥ ५ ॥

( पृष्ठतो विलोक्य[11] । ) तत्कोऽत्र । रथमुपनयतु । अथवालमिदानीं मम रथप्रतीक्षया । सशास्त्र एवास्मि[12] सजलजलधरप्रभाभासुरेण[13] मुग्धप्रभ[14]विमलकलधौतत्सरुणामुना खड्गेन । यावत्[15]समरभुवमवतरामि । ( परिक्रम्य वामाक्षिस्पन्दनं सूचयित्वा । ) अये[16], ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्यानिमित्तानि समरगमनविघ्नमुत्पादयन्ति । भवतु । । गच्छामि[17] । (सावष्टम्भं परिक्रम्याग्रतो विलोक्य । )

---

१. 'उत्खातखड्गः'. २. 'रवानुकारी'. ३. 'अभूतपूर्वरवः'; 'अभूतपूर्वः रवः'; 'अभूतपूर्वः श्रुतः'. ४. 'दर्पातिक्रान्त–'. ५. 'कोपितः'. ६. 'यतः' इति क्वचिन्नास्ति. ७. 'आत्मसदृशभावम्'. ८. 'धैर्यस्य'. ९. 'अभिमतम्'. १०. 'क्रुधः'. ११. '( पृष्ठतो विलोक्य ।) तदलमिदानीं मम रथप्रतीक्षयानया' इति पाठः. १२. 'चास्मि'; 'चाहम्'. १३. 'भास्वरेण'. १४. 'सुप्रभवि-मल कलधौतसंपादितत्सरुणा खड्गेन' इति पाठः. १५. 'तावत्'. १६. 'आः कथम्'; कथम्'. १७. 'अवगच्छामि'

कथमेवधीरितक्षात्रधर्माणामुज्झितसत्पुरुषोचितलज्जावगुण्ठनानां निस्मृतस्वामिसत्कारलघुचेतसां द्विरदतुरङ्गमचरणचारिणामगणितकुलयशः सदृशपराक्रमव्रतानां रणभूमेः समन्तादपक्रामतामयं महान्नादो बलानाम् । (निरूप्य । ) हा हा धिक्कष्टम् । कथमेते महारथाः कर्णादयोऽपि समरात्पराङ्मुखा भवन्ति । कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत् । भवतु संस्तम्भयामि[10] । भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः, कृतं कृतममुना[11] समरपरित्यागसाहसेन ।

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वे[12] ॥ ६ ॥

अपि च ।

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं[13] को भयस्यावकाशः ॥ ७ ॥

(नेपथ्ये । )

कुतोऽद्यापि ते तातः ।

---

१. 'अवधीरितसकलक्षात्र–'. २. 'उत्सृष्ट–'. ३. 'त्यक्तद्विरद'. ४. 'वय'. ५ 'रणभूमेः समन्तादपक्रामतामस्मत्सेनाभटानामयं महानिनादः', 'रणभूमेः पराक्रामतामयं महान्नादो बलानाम्' इति वा पाठः. ६. 'पुनरवलोक्य'; 'अन्यतोऽवलोक्य'. ७ 'अहह धिक्कष्टम्', 'धिक्कष्टम्'. ८. 'सङ्ग्रामात्पराङ्मुखीभवन्ति' ९. 'कथं नु' इत्यस्मात्पूर्वं '( साशङ्कम् । )' इत्यधिकं क्वचित्. १० 'संस्तम्भयामि' इत्यत्र 'एवं तावत्' इति बहुपुस्तकेषु पाठः. ११. 'अमुना' इति क्वचिन्नास्ति. १२. 'कुरुध्वम्', 'क्रियेत'. १३. 'रणधुराम्'.

**अश्वत्थामा**—(श्रुत्वा ।) किं नु—'कुतोऽद्यापि ते तात' इति । (सरोषम्[1] ।) आः क्षुद्र समरभीरो[2], कथमेवं प्रलपतो न सहस्रधा न विदीर्णमनया[3] जिह्वया ।

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पाप पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ८ ॥

( प्रविश्य सम्भ्रान्तः संप्रहारः[4] । )

**सूतः**—परित्रायतां परित्रायतां कुमारः । (इति पादयोः पतति[5] ।)

**अश्वत्थामा**—(विलोक्य ।) अये, कथं[6] तातस्य[7] सारथिरश्वसेनः । आर्य[8], ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि किं मत्तः[9] परित्राणमिच्छसि ।

**सूतः**—(सकरुणम्[10] ।) कुतोऽद्यापि[11] ते तातः ।

**अश्वत्थामा**—(सावेगम् ।) किं तातो[12] नामास्तमुपगतः ।

**सूतः**—अथ किम् ।

**अश्वत्थामा**—हा[13] तात, (इति मोहमुपगतः ।)

**सूतः**—कुमार, समाश्वसिहि समाश्वसिहि ।

---

१ 'सरोषम् ।' इति क्वचिन्नास्ति २ 'भीरो ३ 'विदीर्णम् ४ 'संप्रहारः' इति क्वचिन्नास्ति ५ 'पादयोः पतति' इत्यत्र 'आत्मानं पात-यति' इति क्वचित्पाठः ६ 'कथं' इति क्वचिन्नास्ति ७ तातसारथिः ८ 'आर्य आर्य ननु त्रैलोक्यत्राणक्षमस्य, 'आर्य, त्रैलोक्यत्राणक्षमस्य तातस्य' इति वा पाठः ९ 'मत्तः' द्विगुणनात् १० '(उत्थाय । सकरुणम् ।)', '(सास्रम् ।)'. ११ 'कुमार, कुतोऽद्यापि' इति क्वचित्पाठः १२ 'तात एव नास्ति' इति क्वचित्पाठः १३ 'हा तात, हा तात, (इति मोहमुपगम्य पतति ।)' इति पाठः

**अश्वत्थामा**—(लब्धसंज्ञ सास्रम् ।) हा तात, हा सुतवत्सल, हा लोकत्रयैकधनुर्धर, हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्, क्वासि । प्रयच्छ मे प्रतिवचनम् ।

**सूतः**—कुमार, अलमत्यन्तशोकावेगेन । वीरपुरुषोचिता विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव ।

**अश्वत्थामा**—(अश्रूणि प्रमृज्य ।) आर्य, कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः ।

किं शिष्याद्गुरुदक्षिणा गुरुणादा भीमप्रिय प्राप्तवान्

**सूतः**—शान्तं पापम् ।

**अश्वत्थामा**—

अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ।

**सूतः**—कथमेव भविष्यति ।

**अश्वत्थामा**—

गोविन्देन सुदर्शनस्य निशितां धारापथं प्रापित

**सूतः**—एतदपि नास्ति ।

**अश्वत्थामा**—

शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥ ९ ॥

**सूतः**—कुमार,

---

१ '(लब्धसंज्ञ उत्थाय । सास्रम् ।)' २ 'क्वासि । प्रयच्छ मे प्रतिवचनम्' इति क्वचिन्नास्ति. ३ 'कुमार' इति क्वचिन्नास्ति, क्वचित् 'कुमार' इत्यत्र 'आयुष्मन्' इति पाठो वर्तते ४ 'विमुच्य ५. 'भीमात्'. ६ 'गुरुणदात्.' ७ 'शान्त पाप शान्त पापम्' इति क्वचित्पाठ ८ 'उज्झितदयेन' ९ 'नियत'

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये ।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदैव विहितं रिपुणातिघोरम् ॥ १९ ॥

**अश्वत्थामा**—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा ।

**सूतः**—ननु कुमार एव कारणम् ।

**अश्वत्थामा**—कथमहमेव नाम ।

**सूतः**—श्रूयताम् । ( अश्रूणि विमुच्य । )

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥ ११ ॥

**अश्वत्थामा**—हा तात, हा सुतवत्सल, हा वृथामदर्थपरित्यक्तजीवित, हा शौर्यराशे, हा शिष्यप्रिय, हा युधिष्ठिरपक्षपातिन्,. ( इति रोदिति । )

**सूतः**—कुमार, अलमत्यन्तपरिदेवनया कार्पण्येन ।

**अश्वत्थामा**—

श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात त्वया सह शरैरसवो विमुक्ताः ।
जीवाम्यहं पुनरहो भवता विनापि
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥ १२ ॥

( इति मोहमुपगतः । )

१. 'तदास्य विहितं'. २. 'नाम' इति क्वचिन्नास्ति. ३. 'शेते'. ४. 'चेति'. ५. 'सुतवत्सलेन'. ६. 'पुनरयं भवता वियुक्तः' इति पाठः. ७. '( इति मूर्च्छति । )'; '( इति मूर्च्छितः पतति । )'.

**सूतः**—समाश्वसितु समाश्वसितु कुमारः ।

( ततः प्रविशति कृपः । )

**कृपः**—( सोद्वेगं निःश्वस्य । )

धिक्सानुजं कुरुपतिं धिगजातशत्रुं
धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥ १३ ॥

तत्कथं नु खलु वत्समद्य द्रक्ष्याम्यश्वत्थामानम् । अथ वा हिमवत्सार-गुरुश्चेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के । किं तु पितुः परिभवमसदृशमुपश्रुत्य न जाने किं व्यवस्यतीति । अथवा

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥ १४ ॥

( विलोक्य ) तदयं वत्सस्तिष्ठति । यावदुपसर्पामि । ( उपसृत्य ससंभ्रमम् । ) वत्स, समाश्वसिहि समाश्वसिहि ।

**अश्वत्थामा**—( संज्ञां लब्ध्वा । सास्रम् । ) हा तात, हा सकलभुवनैकगुरो, ( आकाशे । ) युधिष्ठिर, युधिष्ठिर,

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषा-
त्सर्वं तदेकपद एव कथं निरस्तम् ॥ १५ ॥

---

१ 'सोद्वेगं कृपः' २ '( सोद्वेगं निःश्वस्य । )' इति क्वचित्पाठः. ३ 'अद्य' इति पुस्तकान्तरे नास्ति ४. 'असदृशं पितुः पराभवमुपश्रुत्य' इति पाठः ५ 'एकस्यैव विपाकोऽयं' इति पाठः. ६ '( विभाव्य । )' ७ 'वत्स, समाश्वसिहि' ८ '( लब्धसंज्ञः सास्रम् । )' इति पाठः.

**सूतः**—[1]कुमार, एष ते मातुलः पार्श्वे शारद्वतस्तिष्ठति ।

**अश्वत्थामा**—(पार्श्वे विलोक्य । सबाष्पम् । ) मातुल,

गतो [2]येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः ।
परीहासाश्चित्राः सततमभवन्येन भवतः
स्वसुः श्लाघ्यो भर्ता क्व नु खलु स ते मातुल गतः ॥ १६ ॥

**कृपः**—[3]परिगतपरिगन्तव्य एव भवान् । तदलमत्यन्तशोकावेगेन ।

**अश्वत्थामा**—मातुल, परित्यक्तमेव मया [4]परिदेवितम् । एषोऽहं सुतवत्सलं तातमेवानुगच्छामि ।

**कृपः**—वत्स, [5]अनुपपन्नमीदृशं व्यवसितं भवद्विधानाम् ।

**सूतः**—[6]कुमार, अलमतिसाहसेन ।

**अश्वत्थामा**—[7]आर्य शारद्वत,

मद्वियोगभयात्तातः परलोकमितो गतः ।
[8]करोम्यविरहं तस्य वत्सलस्य सदा पितुः ॥ १७ ॥

**कृपः**—वत्स, यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वयेऽप्यनुवर्तनीया इति । पश्य ।

निवापाञ्जलिदानेन [9]केतनैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा ॥ १८ ॥

---

१. 'आयुष्मन्नु'. २. 'येनासि'. ३. 'परिगतः परिगन्तव्यमेवात्रभवान्' इति पाठः. ४. 'परिदेवनम्'. ५. 'अनुपपन्नमिदं भवद्विधानाम्'; 'अनुपपन्नमीदृशं भवद्विधानाम्'; 'अनुपपन्नं भवद्विधानामिदम्' इति पाठान्तराणि. ६. 'वत्स'. ७. 'आर्य, किमुच्यते' इति बहुपुस्तकानां पाठः. ८. 'करोमि विरहं तस्य वत्सलस्य कथं पितुः' इति पाठः. ९. 'वितानैः'.

**सूतः**—आयुष्मन्, यथैव[1] मातुलस्ते शारद्वतः कथयति तत्तथा।

**अश्वत्थामा**—आर्य, सत्यमेवेदम्। किंत्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान्धारयितुम्। तद्गच्छामि तमेवोद्देशं यत्र तथाविधमपि[2] पितरं द्रक्ष्यामि। (उत्तिष्ठन्खड्गमालोक्य विचिन्त्य।) कृतमद्यापि शस्त्रग्रहणविडम्बनया[3]। भगवन् शस्त्र,[4]

गृहीतं येनासीः परिभवभयान्नोचितमपि[5]
प्रभावाद्यस्याभून्न[6] खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते॥

(इत्युत्सृजति[7]।)

(नेपथ्ये।)

भो भो राजानः, कथमिह भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते[8]।

**अश्वत्थामा**—(आकर्ण्य[9]। शनैः शनैः शस्त्रं स्पृशन्।) किं[10] किं; गुरोर्भारद्वाजस्य परिभवः।

(पुनर्नेपथ्ये।)

आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्
द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य[11]।

---

१. 'यदाह शारद्वतः।', 'यथाह शारद्वतः।', 'यथा ते मातुलः कथयति तथैवैतत्।' इति नानाविधः पाठः २ 'तादृशमपि' ३ 'अलमद्यापि शस्त्रग्रहणविद्यया' इति पाठः ४ एतदनन्तरं '(साञ्जलिं बद्ध्वा)' इति क्वचिदधिकः पाठः ५ 'नोचितमिति' ६ आसीत्' ७ '(इति परित्यक्तुमिच्छति।)' ८ 'भवन्तः सर्वे गुरोः परिभवममुना नृशंसेन प्रयुक्तमत्रभवतो भारद्वाजस्योपेक्षन्ते', 'भवन्तस्तत्रभवतः क्षत्रियगुरोर्भारद्वाजस्यासदृशं परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते' इति पाठौ ९ '(आकर्ण्य। सक्रोधं शनैः खड्गं स्पृशन्।)' इति क्वचित्पाठः १० 'किं', 'किं नु' ११. 'क्षालितार्धाननस्य.'

मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥ २० ॥

( सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा । ) किं नामेदम् ।

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं व्रतमास्थितस्य ।
तातस्य मे पलितमौलिनिरस्तकाशे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ २१ ॥

**कृपः**—वत्स, एवं किल जनः कथयति ।

**अश्वत्थामा**—किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः ।

**सूतः**—( सभयम् । ) कुमार, आसीदयं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः ।

**अश्वत्थामा**—हा तात, हा पुत्रप्रिय, मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः । अथ वा

परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
असंख्यातास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवाय पादः शिरसि निहितस्तस्य न करः ॥ २२ ॥

आः दुरात्मन्पाञ्चालापसद,

---

१. 'शममास्थितस्य'. २ 'निमीलिताक्षे'. ३. 'मन्दभाग्यस्य'. ४. '( विचिन्त्य । ) 'अथ वा' इति क्वचित्पाठः. ५. 'शोकान्धमनसः'; 'शोकार्तमनसा'. ६. 'स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपोः'; 'असंख्यातास्त्रौघद्रविणमदलेशस्य रिपुणा' इति वा पाठः; ७. 'ममैव'. ८. 'तस्य सद्मा'.

तात शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे ।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना
तूलोक्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥ २३ ॥

युधिष्ठिर, युधिष्ठिर, अजातशत्रो, अमिथ्यावादिन्, धर्मपुत्र, सानुजस्य ते किमनेनापकृतम् । अथ वा किमनेनालीकप्रकृतिजिह्मचेतसा । अर्जुन, सात्यके, बाहुशालिन्वृकोदर, माधव, युक्तं नाम भवता सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम् । अथ वा सर्व एवैते पातकिनः । किमेतैः ।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

**कृपः**—वत्स, किं न सभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ।

**अश्वत्थामा**—भो भो पाण्डवमत्स्यसोमकमागधेया क्षत्रियापसदाः,

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ।

---

१ 'जड, विदधतः' २ 'अर्जुन अर्जुन, सात्यके सात्यके' इति क्वचित्पाठः
३ 'भवता सुरासुरमनुजगुरोर्लोकत्रयैकधनुर्धरस्य' इति क्वचित्पाठः ४ पतिभिः'.
५. 'न किंचिदसमाप्यते' ६ 'मागधाः क्षत्रिया'

किमद्याश्वत्थामा तदरिशिरोसारनिरस

न कर्ने कारात्र प्रभवति निधातु रणमुखे ॥ २५ ॥

सूत, गच्छ त्व सर्वोपकरणे साग्रामिके सर्वायुधैरुपेत महाहवलक्षण नामास्य स्यन्दनमुपनय ।

**सूतः**—यदाज्ञापयति कुमार । ( इति निष्क्रान्त । )

**कृपः**—वत्स, अवश्यप्रतिकर्तव्येऽस्मिन्दारुणे निकारानौ सर्वेषामस्माक कोऽन्यस्त्वामन्तरेण शक्त प्रतिकर्तुम् । किंतु—

**अश्वत्थामा**—किमत परम् ।

**कृपः**—सैनापत्येऽभिषिच्य भवन्तमिच्छामि समरभुवमवतारयितुम् ।

**अश्वत्थामा**—मातुल, परतन्त्रमिदमकिंचित्कर च ।

**कृपः**—वत्स, न खलु परतन्त्र नाकिंचित्कर च । पश्य ।

भवेदभीष्ममद्रोण धार्तराष्ट्रबल कथम् ।

यदि तत्तुल्यकक्षोऽत्र भवान्धुरि न युज्यते ॥ २६ ॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षम परिपन्थीभवितु किं पुनर्यौधिष्ठिरबलम् । तदेव मन्ये परिकल्पिताभिषेकोपकरण कौरवराजो नचिरात्त्वामेवाभ्युपेक्षमाणस्तिष्ठतीति ।

---

१ 'सूत' इत्यस्मात्पूर्वं '(भूतमहित्य ।)' इति क्वचिदधिक पाठ २ 'आहित लक्षण' ३ 'उपाहर' ४ 'यथाज्ञापयति' ५ 'परिभवाग्नौ' ६ 'किंतु' इति क्वचिन्नास्ति ७ 'अभिषिच्य मन्ये भवन्त'; 'अभिषिक्त भवन्त' ८ 'भवदभीष्ममद्रोण हि धृतराष्ट्रबल' ९ 'तत्तुल्यकर्मात्र भवान् धुर्यो न युज्यते', 'तत्तुल्यकक्षोऽत्रभवान्धुर्यो नियुज्यते' इति पाठौ १० 'युधिष्ठिरबलम्' ११ 'तदहं च मन्ये', 'एव च मन्ये' १२ 'अभ्युदीक्षमाण', प्रतीक्षमाण, 'कौरवनाथो भवन्तमुदीक्षते' इत्यपि क्वचित्पाठ

**अश्वत्थामा**—यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकारजलावगाहनाय । तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सैनापत्यस्वयंग्रहणप्रणयसमाश्वासनया मन्दसंतापं करोमि ।

**कृपः**—वत्स, एवमिदम् । अतस्तमेवोद्देशं गच्छावः ।

(इति परिक्रामतः ।)

(ततः प्रविशतः कर्णदुर्योधनौ ।)

**दुर्योधनः**—अङ्गराज,

तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ २७ ॥

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति । यतः शोकान्धमनसा तेन विमुच्य क्षात्रधर्मकार्कश्यं द्विजातिधर्मसुलभो दैन्यपरिग्रहः कृतः ।

**कर्णः**—राजन्, न खल्विदमेवम् ।

**दुर्योधनः**—कथं तर्हि ।

**कर्णः**—एवं किलास्याभिप्रायो यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति । तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रधारणमिति तथा कृतवान् ।

---

१. 'तातवधविपन्नमनसं'. २. '(ततः प्रविशति राजा कर्णश्च ।)' इति क्वचित्पाठः. ३. 'शोकान्धचेतसा'. ४. 'क्षात्रधर्मकार्कश्यं'. ५. 'द्विजातिसुलभो मार्दवपरिग्रहः' इति बहुपुस्तकानां पाठः. ६. 'राजन्कौरवेश्वर'. ७. 'किं तत्' इति क्वचित्पाठः. ८. 'एवं किल द्रोणस्याभिप्राय आसीत्'; 'एवं किल तस्याभिप्राय आसीत्'; 'एवं किल तस्य मनसि'; 'एवं किल तस्यासीच्चेतः' इति पाठान्तराणि. ९. 'तस्य च वधात्' इति पाठः. १०. 'शस्त्रग्रहणम्'.

**दुर्योधनः**—(सशिरःकम्पम् । ) एवमिदम् ।

**कर्णः**—एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षय[1]मपेक्षमाणेन तेन प्रधानपुरुषवध[2] उपेक्षा कृता ।

**दुर्योधनः**—[3]उपपन्नमिदम् ।

**कर्णः**—अन्यच्च राजन्, [4]द्रुपदेनाप्यस्य बाल्यात्प्रभृत्यभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः ।

**दुर्योधनः**—साधु अङ्गराज, साधु[5] । निपुणमभिहितम् ।

**कर्णः**—न चायं ममैकस्याभिप्रायः । [6]अन्येऽभियुक्ता [7]अपि नैवेदमन्यथा मन्यन्ते ।

**दुर्योधनः**—एवमेतत् । कः संदेहः ।

दत्त्वाभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ २८ ॥

**कृपः**—(विलोक्य । ) वत्स, एष दुर्योधनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति । तदुपसर्पावः ।

(तथा कृत्वा । )

**उभौ**—विजयतां कौर[8]वेश्वरः[9] ।

**दुर्योधनः**—(दृष्ट्वा । ) अये कथं कृपोऽश्वत्थामा च । (आसनादवतीर्य कृप प्रति । गुरो, अभिवादये । ( अश्वत्थामानमुद्दिश्य[10] । ) आचार्यपुत्र,

एह्यस्मदर्थहततात परिष्वजस्व
[11]कौन्तेरिमैर्मम निरन्तरमङ्गमङ्गैः ।

---

१. 'क्षयमुपेक्षमाणेन' २. 'प्रधाननृपवधे'. ३. 'उपपन्नमेतद्'. ४. 'द्रुपदेन चास्य'. ५. 'साधु' इति क्वचिन्नास्ति. ६. 'अन्येऽप्यत्र योद्धारो नैतदन्यथा मन्यन्ते' इति पाठः. ७. 'अपि' इति क्वचिन्नास्ति. ८. 'कौरवराजः' ९. 'विजयतां, विजयतां, राजन्'. १०. '(अश्वत्थामानं प्रति ।)'. ११. 'क्रान्तैः शुचा'; 'क्रान्तैरिदं'; कान्तैरिदं' इति पाठान्तराणि.

स्पर्शस्तवैव भुजयो सदृश पितुस्ते
शोकेऽपि नो विकृतिमेति तनूरहेषु ॥ २९ ॥

( आलिङ्ग्य पार्श्वे उपवेशयति । )

( अश्वत्थामा बाष्पमुत्सृजति । )

**कर्णः**—द्रौणायने, अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

**दुर्योधनः**—आचार्यपुत्र, को विशेष आवयोरस्मिन्व्यसनमहार्णवे । पश्य ।

तातस्तव प्रणयवान्सखा यथा तथा मे
शस्त्रे यथा तव गुरु स तथा ममापि ।
किं तस्य देहनिधने कथयामि दु ख
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ३० ॥

**कृपः**—वत्स, यथाह कुरुपतिस्तथैवैतत् ।

**अश्वत्थामा**—राजन्, एव पक्षपातिनि त्वयि युक्तमेव शोकभार लघूकर्तुम् । किंतु

मयि जीवति यत्तात केशग्रहमवाप्तवान् ।
कथमन्य करिष्याति पुत्रेभ्य पुत्रिण स्पृहाम् ॥ ३१ ॥

**कर्णः**—द्रोणायने, किमत्र क्रियते यदनेनैव सर्वपरिभवपरित्राणहेतुना शस्त्रमुत्सृजता तादृशीमवस्थामात्मा नीत ।

---

१. 'तथैव', 'तवैव' २ 'शोकेऽपि यो महति निर्वृतिमादधाति' इति क्वचित्पाठ ३ द्रोणपुत्र, अलमत्यन्तावेगात्मानं शोकसागरे प्रक्षेप्तुम्' इति पाठ ४ 'अत्यर्थम्' इति क्वचिन्नास्ति ५ 'व्यसनार्णवे ६ 'स पितु सखा मे' इति पाठ ७ एतदनन्तरम् 'कर्ण -किमत्र विचारेण । अश्वत्थामा—राजन्नेवंवादिनि युक्तमेव शोकसागरमुल्लङ्घयितुम्' एवंविध पाठ क्वचिद्दृश्यते ८ 'मत्त त' ९ 'केशग्रहणमासवान्' इति पाठ १० 'द पुत्रिण ११ 'अत्र' इति क्वचिन्नास्ति १२ 'यदा तवैव' इति क्वचित्पाठ १३ 'सर्वपरिभवत्राणहेतुना'. १४ 'एतादृशीम्', 'ईदृशीम्'

**अश्वत्थामा**—अङ्गराज, किमाह भवान्किमत्र क्रियत इति । श्रूयतां यत्क्रियते ।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥ ३२ ॥

अपि च । भो जामदग्न्यशिष्य कर्ण,

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षात्रादेव तथाविधः परिभवस्तातस्य केशग्रहात् ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणात्मजः क्रोधनः ॥ ३३ ॥

**दुर्योधनः**—आचार्यपुत्र, तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम् ।

**कृपः**—राजन्, सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभरः । तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः । किं पुनर्युधिष्ठिरबलम् । अतोऽभिषिच्यतां सैनापत्ये ।

**दुर्योधनः**—सुष्ठु युज्यमानमभिहितं युष्माभिः । किंतु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य ।

---

१ 'अत्र' इति क्वचिन्नास्ति. २ 'यत्क्रियते तत्'. ३. 'मदात्'; 'बलः'. ४. 'प्रतीपम्'. ५. 'स्वयमिह'. ६. 'शोणितभरैः'. ७. 'केशग्रहः'. ८. 'हेतिघस्मर–'. ९. 'नो'. १०. 'द्रौणायनिः'. ११. तथाविधपरिभवस्यानन्यपुरुषसाधारणस्य ते वीरभावस्य च किमन्यत्सदृशम्' इति पाठः. १२. 'युधिष्ठिरबलम्'. १३. एतदनन्तरं क्वचित् '(इत्यङ्गुलीयकं ददाति ।) कर्णः—(सहर्षम् ।) महान्परः प्रसादः । कृपः—असदृशपरिभवसागरे मज्जन्तमेनमङ्गराजस्यापि नोपेक्षितुं युक्तम् । अश्वत्थामा—(साटोपम् ।) राजन्, राजन्, युक्तायुक्तविचारणया किमद्यापि ।' इति पाठो दृश्यते.

कृप.—राजन्, असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम्। अस्यापि तदेवारिकुलमनुशासनीयम्। अत किमस्य पीडा न भविष्यति।

अश्वत्थामा—राजन्, किमद्यापि युक्तायुक्तविचारणया।

प्रयत्नपरिबोधित स्तुतिभिरद्य शेषे निशा
मकेशवमपाण्डवं भुवनमद्य नि सोमकम्।
इय परिसमाप्यते रणकथाद्य दो शालिना-
मैपैतु नृपकाननातिगुरुरद्य भारो भुव ॥ ३४ ॥

कर्णः—(विहस्य।) वक्तु सुकरमिदं दुष्करमध्यवसितुम्। बहव कौरवबलेऽस्य कर्मण शक्ता।

अश्वत्थामा—अङ्गराज, एवमिदम्। बहव कौरवबलेऽत्र शक्ता। किंतु दुःखोपहत शोकावेगवशाद्ब्रवीमि न पुनर्वीरजनाधिक्षेपेण।

कर्णः—मूढ, दु खितस्याश्रुपात, कुपितस्य चायुधद्वितीयस्य समामावतरणमुचितं नैवंविधा प्रलापा ।

---

१ 'अस्यापि च', 'अस्यापि च' इत्यारभ्य 'भविष्यति' इत्यन्त क्वचिन्नास्ति. २. 'राजन्, कौरवेश्वर'. ३ 'दो शालिना'. ४ 'म्यपैतु', 'अपैति'. ५. 'रिपुकाननातिगुरु'. ६ 'कर्ण —द्रोणात्मज, वक्तु सुकरमिदमध्यवसित दुष्करम्', 'कर्ण – वक्तु सुकरमिदमध्यवसितु दुष्करम्', 'कर्ण —(विहस्य।) द्रोणात्मज, वक्तुमिद सुकर दुष्करमध्यवसितुम्' इति पाठान्तराणि ७ 'अङ्गराज, एव बहवः शक्ता। 'किंतु दु खोपहत शोकावेगवशात्', अङ्गराज, दुःखोपहतः शोकावेगवशात्', अङ्गराज, एवम्। बहव कौरवबलेऽत्र शक्ता। किंतु दुःखोपहतशोकावेगवशात्' इति पाठान्तराणि ८ 'द्रोणायने'

**अश्वत्थामा**—(सक्रोधम् ।) अरे रे राधागर्भभारभूत, सूतापसद ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण । पश्य ।

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं
संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ।
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्रेण नास्त्रेण यत् ॥ ३५ ॥

**कर्णः**—(सक्रोधम् ।) अरे रे वाचाट, वृथाशस्त्रग्रहणदुर्विदग्ध, बटो,

निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम् ।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना ॥ ३६ ॥

अपि च ।

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ ३७ ॥

**अश्वत्थामा**—( सक्रोधम् । ) अरे रे रथकारकुलकलङ्क, अरे राधागर्भभारभूत, आयुधानभिज्ञ, तातमप्यधिक्षिपसि । अथवा

स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।

---

१. '(सरोषम् ।)'. २. 'राधायाः सुत' इति क्वचित्पाठः. ३. 'सूतापसद' इत्यस्मादनन्तरं केषुचित्पुस्तकेषु 'किमेवमाक्षिपसि । कर्णः—सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् । दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ अश्वत्थामा—किमाह भवान् । ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः' इति पाठो वर्तते. ४. 'कृताप्रियः'. ५. 'किम्'. ६. 'यो वा स्त्रो वा'; 'यो वा सो वा'. ७. 'प्रतिदिशम्'.

परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क्व नु तदा ॥ ३८ ॥

**कर्णः**—( विहस्य । ) एवं भीरुरहम् । त्वं पुनर्विक्रमैकरसं स्वपितरमनुस्मृत्य न जाने किं करिष्यसीति महान्मे संशयो जातः । अपि च रे मूढ,

यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान् ।
यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥ ३९ ॥

**अश्वत्थामा**—( सक्रोधं सकम्पं च । ) दुरात्मन्, राजवल्लभ, प्रगल्भ, सूतापसद, असंबद्धप्रलापिन्,

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ ४० ॥

( इति तथा कर्तुमुत्तिष्ठति । )

**कृपदुर्योधनौ**—वत्स, मर्षय मर्षय । ( इति निवारयतः । )

( अश्वत्थामा चरणप्रहारं नाटयति )

**कर्णः**—( सक्रोधमुत्थाय । खड्गमाकृष्य । ) अरे दुरात्मन्, ब्रह्मबन्धो, आत्मश्लाघ,

---

१. 'सत्यव्रतधनः'. २. 'त्वं पुनर्विक्रमैकरसः । तव पितरमनुस्मृत्य महान्मे संशयो जातः ।'; 'पुनर्विक्रमैकरसं तव पितरमनुस्मृत्य महान्मे संशयो जातः ।'; 'त्वं पुनस्त विक्रमैकधनं स्वपितरमनुस्मृत्य न जाने किं करिष्यसि । महासंशयो मे जातः ।' इति नानाविधः पाठः. ३. 'एव'; 'एवम्'. ४. '( इत्युत्तिष्ठति । )' इति क्वचित्पाठः. ५. 'गुरुपुत्र'. ६. 'आत्मश्लाघिन्'.

जात्या काममवध्योऽसि चरणं त्विममुद्धृतम् ।
अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ ॥ ४१ ॥

[6] अश्वत्थामा—अरे मूढ, जात्या काममवध्योऽहम् । इयं सा जातिः परित्यक्ता । ( इति यज्ञोपवीतं छिनत्ति । पुनश्च सक्रोधम् । )

अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया ।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥ ४२ ॥

( उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ । कृपदुर्योधनौ निवारयतः । )

दुर्योधनः—आचार्यपुत्र शस्त्रग्रहणेनालम् ।

कृपः—वत्स, सूतपुत्र, शस्त्रग्रहणेनालम् ।

अश्वत्थामा—मातुल, मातुल, किं निवारयसि । अयमपि तातनिन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव ।

कर्णः—राजन्, न खल्वहं निवारयितव्यः ।

---

१. 'तावत्'. २. 'इदम्'. ३. 'उद्यतम्'; 'उद्धतम्'. ४. 'पातितं'. ५. 'द्रक्ष्यसि'. ६. 'अश्वत्थामा–अरे मूढ, किं नाम जात्या काममवध्योऽहम् । इयं सा जातिस्त्यक्ता । ( इत्युपवीतं छिनत्ति । )' इति क्वचित्पाठः; क्वचित्तु 'अश्वत्थामा—अरे रे, किं जात्या तावदवध्योऽहं यत एवं ब्रवीषि । गृहाण शस्त्रम् । इयं सा जातिः परित्यक्ता । ( इति यज्ञोपवीतं भूमौ निक्षिपति । ) गृहाणास्त्रं भज त्यक्त्वा मौलौ वा धारयाञ्जलिम् । अद्य मिथ्याप्रतिज्ञोऽसौ गाण्डीवी क्रियते मया । कर्णः—गृहाणास्त्रम् । ( इत्येन्योन्यव्यसनं कुरुतः । ) राजा—अंगराज, अंगराज, अलमाचार्यपुत्रेण सह शस्त्रग्रहणेन । गुरुपुत्र, अलमंगराजेन सह शस्त्रग्रहणेन । ( कृपोऽपि वारयति । ) अश्वत्थामा—मातुल, किं मां निवारयसि । समासादयतु तावत्तातनिन्दाप्रगल्भः सूतकुलकलङ्को मद्भुजान्तरनिष्पेषसुलभं प्राणानामवमानम्' इत्येष पाठो वर्तते. ७ 'चेत्'. ८. 'अयं'. ९. 'अधुना'. १०. 'वारयतः'. ११. 'सखे, आचार्यपुत्र'. १२. 'वारयसि'. १३. 'सूतकुलाधम'.

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया ।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥ ४३ ॥

**अश्वत्थामा**—राजन्, मुञ्च मुञ्चैनम् । आसादयतु मद्भुजान्तरनिष्पेषमुलभमसूनामवसादनम् । अन्यच्च राजन्, स्नेहेन वा कार्येण वा यत्त्वमेनं तताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि वृथैव ते । पश्य ।

पापः प्रियस्तव कथं गुणिनः सखायं
सूतान्वयः शशधरान्वयसम्भवस्य ।
हन्ता किरीटिनमहं नृप मुञ्च कुर्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥ ४४ ॥

( इति प्रहर्तुमिच्छति । )

**कर्णः**—(खड्गमुद्यम्य ।) अरे वाचाट, ब्राह्मणाधम, अयं न भवसि । राजन्, मुञ्च मुञ्च । न खल्वहं वारयितव्यः । ( हन्तुमिच्छति । )

( दुर्योधनकृपौ निवारयतः । )

**दुर्योधनः**—कर्ण, गुरुपुत्र, कोऽयमद्य युवयोर्व्यामोहः ।

**कृपः**—वत्स, अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽयं व्यामोहः । स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः ।

**अश्वत्थामा**—मातुल, न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम् ।

---

१. 'स्नेहेन कार्येण वा त्वमेनं' इति पाठः. २. 'ताताधिक्षेपप्रगल्भमस्मत्तो रक्षसि' इति क्वचित्पाठः. ३. 'सहायः'. ४. 'सूतात्मजः'. ५. 'असौ'; 'अयम्'. ६. 'एवम्'. ७. 'कृपः—भो अश्वत्थामन्, ननु भोः कर्ण, अन्यदेव प्रकृतमन्यत्रावेगः । कोऽयमद्य युवयोर्व्यामोहः । स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्मत्त एव उपपद्यत इति नायं पन्था ।' इति क्वचित्पाठः. ८. 'आयुष्मन्'. ९. 'आवेगः'. १०. 'शादयितुम्'.

**कृपः**—वत्स अकालः खलु स्वबलप्रधानविरोधस्य ।

**अश्वत्थामा**—मातुल, यद्येवम् ।

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।
बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखममुं वेत्तु समरे ॥ ४५ ॥

( इति खड्गमुत्सृजति । )

**कर्णः**—( विहस्य । ) कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम ।

**अश्वत्थामा**—ननु रे, अपरित्यक्तमपि भवादृशैरायुधं चिरपरित्यक्तमेव निष्फलत्वात् ।

**कर्णः**—अरे मूढ,

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ ४६ ॥

( नेपथ्ये )

आः दुरात्मन्, द्रौपदीकेशाम्बराकर्षणमहापातकिन्, धार्तराष्ट्रापसद, चिरस्य खलु कालस्य मत्संमुखीनमागतोऽसि । क्षुद्रपशो, क्वेदानीं गम्यते । अपि च । भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः, शृण्वन्तु भवन्तः ।

---

१. 'प्रियसखबलं' २. '( इति खड्गमुत्सृजति । ) कर्ण.—( विहस्य । ) अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात् । धृतायुधो यावदहं, इति क्वचित्पाठः. ३. 'बाहुशालिन्'. ४. 'मत्संमुखागतोसि'.

कृष्टा येन [1]शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां [2]गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवा-
न्सोऽयं [3]मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवा[4] ॥ ४७ ॥

( सर्वे आकर्णयन्ति )

[5]अश्वत्थामा—(सोत्प्रासम् ।) अङ्गराज, सेनापते, जामदग्न्यशिष्य, द्रोणोपहासिन्, भुजबलपरिरक्षितसकललोक, ( धृतायुध (३।४६) इति पठित्वा ।) इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं सांप्रतं भीमाद्दुःशासनम् ।

कर्णः—[6]आः का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्यच्छायामप्याक्रमितुम् । युवराज, न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ( इति निष्क्रान्तः । )

अश्वत्थामा—राजन्कौरवनाथ, अभीष्मद्रोणं संप्रति कौरवबलमिमां लोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम् । अतः स्वयमेव भ्रातुः प्रतीकारपरो भव ।

---

१ 'स्पृष्टा २ 'शीरोरुहेषु पशुना ३ गुरूणां ४ 'मद्भुजगोचरे ५ 'कौरवाः' ६ अश्वत्थामा—(सोपहासम् ।) अङ्गराज । कर्णः—किमाह भवान् । अश्व०—सेनाधिपते । कर्णः—तत्र कः संदेहः । अश्व—जामदग्न्यशिष्य । कर्णः—बाढम् । अश्व०—द्रोणोपहासिन् । कर्णः—एवमेतत् । अश्व०—त्वयोक्तम् । कर्णः—किं मयोक्तम् । अश्व०—( धृतायुधो यावदहं इति पठति । ) कर्णः—बाढमुक्तम् । अश्व०—इदं महत्कदनं संवृत्तम् । कर्णः—किं जातम् । अश्व०—भीमः कथयति । कर्णः—किम् । अश्व०—श्रूयताम् । कर्णः—किं कथ्यताम् । अश्व०—( 'कृष्टा येन' इत्यादि पठति ) 'तद्भीमाद्दुःशासनं संरक्ष्यतां युवराज । इत्यपरः पाठः ७ '(सोत्प्रासम् ) इति क्वचिन्नास्ति ८ 'जामदग्न्याच्छिष्य' ९ 'आः, शक्तिरस्ति वृकोदरस्य' १० 'युवराजस्य' ११ 'अतिक्रमितुम्' 'स्पर्शयितुम् १२ 'बलम्

**दुर्योधनः**—आः[1], शक्तिरस्ति दुरात्मनः पवनतनयस्यान्यस्य[2] वा मयि जीवति[3] वत्सस्य[4] छायामप्याक्रमितुम्[5]। वत्स[6], न भेतव्यं न भेतव्यम्। कः कोऽत्र भोः। रथमुपनय। (इति निष्क्रान्तः।)

(नेपथ्ये कलकलः।)

**अश्वत्थामा**—(ससंभ्रमम्।)[7] मातुल, कष्टं कष्टम्[8]। एष[9] भ्रातुः प्रतिज्ञाभंगभीरुः किरीटी सम दुर्योधनराधेयौ शरैरभिद्रवति[10]। सर्वथा पीतं दुःशासनशोणितं भीमेन। न[11] खलु विपद्दे दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम्। अनृतमनुमतं नाम। मातुल, शस्त्रं शस्त्रम्।

सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम्॥ ४८॥

(इति खड्गं महीतुमिच्छति।)

(नेपथ्ये।)

महात्मन्, भारद्वाजसूनो, न खलु सत्यवचनमुल्लङ्घयितुमर्हसि[12]।

**कृपः**—वत्स, अशरीरिणी भारती[13] भवन्तमनृतादभिरक्षति।

**अश्वत्थामा**—कथमियममानुषी मार्गेण[14]नानुमनुते संग्रामावतरणं मम।

---

१. 'आः, का शक्तिर्दुरात्मनः, आः का शक्तिरस्ति दुरात्मनः'. २.'अन्यस्य वा' इति क्वचिन्नास्ति. ३.एतदनन्तरम्'शस्त्रपाणौ' इति क्वचित्. ४.'दुःशासनस्य'; ५. 'लंघयितुम्'. ६. 'वत्स, न भेतव्यम्' इति पाठः. ७. '(ससंभ्रमम्।)' इत्यत्र '(अग्रतो विलोक्य।)' इति बहुपुस्तकानां पाठः. ८. 'मातुल, हा धिक्कष्टम्'; 'मातुल, मातुल कष्टम्.' ९. 'एष खलु'. १०.' शरवर्षैर्दुर्वारैरभिद्रवति हा कष्टं कष्टम्। सर्वथा पीतं' इति बहुपुस्तकानां पाठः. ११. 'तन्न युक्तं दुर्योधनस्यानुजस्यैतां विपत्तिमुपेक्षितुम्। अनृतमनुमतं नाम भगवन् शस्त्र' इत्यपि क्वचित्पाठः. १२. सत्यवचनमनुल्लंघितपूर्वमुल्लंघयितुम्'. १३.'वाणी'. १४.'नानुमनुते सङ्ग्रामावतरणं मे। भोः, कष्टम्। आः, पक्षपातिनो देवा अपि पाण्डवानाम्। सर्वथा पीतं दुःशासनशोणितं भीमेन। भोः कष्टं कष्टम्।' इति बहुपुस्तकानां पाठः.

सर्वथा पाण्डवपक्षपातिनो देवाः । भोः, कष्टं कष्टम् ।

दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम् ।
दुर्योधनस्य कर्तास्मि किमन्यत्प्रियमाहवे ॥ ३९ ॥

मातुल, राधेयक्रोधवशादनार्यमस्माभिराचरितम् । अतस्त्वमपि तावदस्य राज्ञः पार्श्ववर्ती भव ।

**कृपः**—गच्छाम्यहमत्र प्रतिविधातुम् । भवानपि शिबिरसंनिवेशमेव प्रतिष्ठताम् ।

( परिक्रम्य निष्क्रान्तौ । )[1]

## इति तृतीयोऽङ्कः ।



१ '( उभौ परिक्रम्य निष्क्रान्तौ )' इति पाठः.

## चतुर्थोऽङ्कः ।

( ततः प्रविशति प्रहारमूर्च्छितं रथस्थं दुर्योधनमपहरन्सूतः । )

( सूतः ससंभ्रमं परिक्रामति )

( नेपथ्ये )

भो भोः, बाहुबलावलेपप्रवर्तितमहासमरदोहदाः कौरवपक्षपातपणीकृतप्राणद्रविणसंचया नरपतयः, संस्तभ्यन्तां निहतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनभयपरिस्खलत्प्रहरणानि रणाद्द्रवन्ति बलानि ।

**सूतः**—( विलोक्य । ) कथमेष धवलचपलचामरचुम्बितकनकमण्डलुना शिखरावबद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसंमर्दविषमोद्घातकृतकलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरचक्रपराक्रमप्रसरः प्रद्रुतमात्मबलमाश्वासयन्कृपः किरीटिनाभियुक्तमङ्गराजमनुसरति । हन्त, जातमस्मद्बलानामवलम्बनम् ।

( नेपथ्ये कलकलान्तरम् । )

भो भोः, अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधा न भेतव्यं न भेतव्यम् । अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो रभसगामी स्तोकावशि-

---

१. 'बाहुबलाहंकारप्रवर्तित–'. २. कौरवकुलपक्षपात–. ३. संस्तभ्यन्ता संस्तभ्यन्तां'. ४. 'हत–'. ५. 'विषाद–'. ६. 'परिस्खलित–'. ७. 'द्रवन्ति'; 'विद्रवन्ति'. ८. 'धवलचपलचारुचामर'; 'धवलचारुचामर'. ९ 'शिखराबद्ध–'; शिखरावनद्ध–'. १०. 'विषमोत्खात–'. ११. 'परबलपराक्रमप्रद्रुतमात्मबलं'; परचक्रपराक्रमप्रसरः प्रतिपक्षमीक्षमाणमात्मीयबलं'; 'परबलपराक्रमप्रसरः प्रद्रुतमात्मबलं' इति नानाविधः पाठः. १२. 'जातमेव बलानामवलम्बनम्' इति क्वचित्पाठः. १३. 'रणरभसगामी'.

ष्प्रतिज्ञामहोत्सव कौरवराजस्य द्यूतनिर्जितो दास पार्थमध्यमो भीमसेन सर्वान्भवत साक्षीकरोमि । श्रूयताम्—

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रत
प्रत्यक्ष कुरुबान्धवस्य मिषतं कर्णस्य शल्यस्य च ।
पीत तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिण
कोष्ण जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षस ॥ १ ॥

सूतः—( श्रुत्वा । सभयम् । ) कथमासन्न एव दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतो मारुति । अनुपलब्धसज्ञश्च महाराज । भवतु । दूरमपहरामि स्यन्दनम् । कदाचिद्दु शासन इवास्मिन्नप्ययमनार्योऽनार्यमाचरिष्यति । ( त्वरित परिक्रम्यावलोक्य च । ) अये, अयमसौ सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसवाहितसान्द्रकिसलयो न्यग्रोधपादप । [१३]उचिता विश्रामभूरिय समरव्यापारखिन्नस्य वीरजनस्य । [१४]अत्र स्थितश्छायाचिततालवृन्तेन हरिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणामयोग्येन [१५]सरसीसमीरणेनामुना गतक्लमो भविष्यति महाराज । [१६]लूनकेतुश्चायं रथोऽनिवारित एव प्रवेक्ष्यतिच्छायामिति । ( प्रवेश रूप

१. जितदास . २ 'पाण्डवमध्यम ' ३ 'साक्षिण: करोमि' ४ 'च तथा', 'मृषत ' ५ 'अये'. ६ 'एष:', 'एवासौ'. ७ कौरववनोत्पातमारुत ' ८ 'मारुति ' इति क्वचिन्नास्ति ९ 'अनुपलब्धसज्ञश्च तावदत्र महाराज ', 'अनुपलब्धसज्ञश्च तावन्महाराज १० 'सुदूरमपनयामि', 'दूरमपसारयिष्यामि'. ११. 'अयम्' इति क्वचिन्नास्ति १२ 'त्वरिततरं' १३ 'उचितेय विश्रामभूमि ' १४ 'अत्रस्थोऽय मयोपवीजिततालवृन्तेन', 'अत्रस्थोऽयमयाचितेतालवृन्तेन , 'अत्रस्थश्चायमयत्नोपवीजिततालवृन्तेन' इति पाठान्तराणि १५ सरसीसमीरणेन च विगतक्लम ' इति पाठ १६ 'लूनकेतु ' इत्यस्मात्प्राक् ( ऊर्ध्वमवलोक्य । )' इति कविवचन केषुचित्पुस्तकेषु दृश्यते १७. 'छायाम् । (इति प्रवेश रूपयित्वा । )' इति पाठ

बित्वा ।) के कोऽत्र भो । ( समन्तादवलोक्य । ) कथ न कश्चिदत्र परिजन । नून तथाविधस्य वृकोदरस्य दर्शनादेवविधस्य च स्वामिनस्त्रासेन शिबिरसनिवेशमेव प्रविष्ट । कष्टं भो, कष्टम् ।

दत्त्वा द्रोणेन पार्थादभयमपि न सरक्षित सिन्धुराज·
क्रूर दु शासनेऽस्मिन्हरिण इव कृत भीमसेनेन कर्म ।
दु.साध्यामप्यरीणा तृणमिव समरे पूरयित्वा प्रतिज्ञा
नाह मन्ये सकाम कुरुकुलविमुख दैवमेतावतापि ॥ २ ॥

(राजानमवलोक्य ।) कथमद्यापि चेतना न लभते महाराज । भो, कष्टम् ।

( नि श्वस्य । )

मदकलितकरेणुभज्यमाने
विपिन इव प्रकटैकशालशेषे
हतसकलकुमारके कुलेऽस्मि-
स्त्वमपि विधेरवलोकित कटाक्षे ॥ ३ ॥

( आकाशे लक्ष्य बध्वा ) ननु भो हतविधे, भरतकुलविमुख,

अक्षतस्य गदापाणेरनारूढस्य सशयम् ।
एवापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया ॥ ४ ॥

---

१. 'क कोऽत्र भो । व्यजन चामरं शीघ्रमुपनयतु । (दिशोऽवलोक्य ।) कथ न कश्चिदत्र परिजन । नून तथाविधस्य वृकोदरस्य दर्शनादेवविधे मम स्वामिनि त्रासात्' इत्यपि क्वचित्पाठ २ 'अत्र' इति क्वचिन्नास्ति ३ 'तथाभूतस्य' ४ 'द्रोणेनाकृष्य पार्थादभयमपि च न सरक्षित' इति पाठान्तरम् ५ 'लघुमिव' ६ 'कुरुकुलनिधने' ७ कथमद्यापि न चेतनामुपलभते महाराज' इति पाठ . ८ 'स्वामी'. ९ 'करीन्द्रभज्यमान' १० 'अपि'

**दुर्योधनः**—(शनैरुपलब्धसज्ञः ।) आः, शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञा पूरयितुम् । वत्स दुःशासन भेतव्य न भेतव्यम् अयमहमागतोऽस्मि । ननु सूत, प्रापय रथं तमुद्देशं यत्र वत्सो मे दुःशासनः ।

**सूतः**—आयुष्मन्, अक्षमा सम्प्रति वाहास्ते रथमुद्वोढुम् । (अपवार्य ।) मनोरथं च ।

**दुर्योधनः**—(रथादवतीर्य सगर्वं साकूतं च ।) कृतं स्यन्दनगमनकालातिपातेन ।

**सूतः**—(सवैलक्ष्यं सकरुणं च ।) मर्षयत्वायुष्मान् ।

**दुर्योधनः**—धिक्सूत, [10] किं रथेन । केवलमरातिविमर्दसघट्टसचारी दुर्योधनः खल्वहम् । तद्गदामात्रसहाय समरभुवमवतरामि ।

**सूतः**—देव, एवमेतत् ।

**दुर्योधनः**—यद्येव [12] किमेवं भाषसे । पश्य ।

बालस्य मे प्रकृतिदुर्ललितस्य पाप-
[13] पास्यत्यसृग्जनसमक्षमुदायुधोऽसौ ।

---

१. 'स्वैरमुपलब्धसज्ञः', सधीरमुपलब्धसज्ञः'; उपलब्धसज्ञकः'. २. 'आः, का शक्तिरस्ति दुरात्मन पवनतनयस्य वृकोदरहतकस्य' 'आः, का शक्तिरस्ति पवनतनयस्य वृकोदरस्य'. ३. 'मयि जीवति गदापाणौ वत्सदुःशासनस्य छायामप्यतिक्रमितुम्' इति पाठ ४. 'सूत, प्रापय रथ तमुद्देशं यत्र वत्सो दुःशासनस्तिष्ठति', 'सूत, प्रापय रथं तमुद्देश यत्र वत्सं द्रक्ष्यामि' इति पाठौ. ५. 'देव, अक्षमास्ते वाहा सम्प्रति'; 'महाराज, अक्षमा सम्प्रति वाहास्ते' ६ रथमेनमुद्वोढुम्'. ७ 'वय च'. ८. 'किं'. ९. 'मर्षयतु मर्षयतु देवः'; 'मर्षयतु मर्षयत्वायुष्मान्'. १०. 'किं रथेनैव । अरातिविमर्दसघट्टसचारी दुर्योधनः । तद्गदामात्रसहाय एव समरभुवमवतरामि' इति पाठ. ११ 'सूत —एवमिदम् ।', 'सूतः—आयुष्मन्, एवमेतत् । क सदेहः ।' इति पाठौ. १२. 'किमिति त्वमेव भाषसे' इति पाठः. १३. 'पापं व्यवस्यति समक्षमुदायुधोऽसौ' इति पाठः.

अस्मिन्निवारयसि किं व्यवसायिनं मां
क्रोधो न नोऽपि करुणा न च तेऽस्ति लज्जा ॥ ५ ॥

**सूतः**—(सकरुणं पादयोर्निपत्य ।) एतद्विज्ञापयामि । आयुष्मन्, संपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन । अत एव ब्रवीमि ।

**दुर्योधनः**—(सहसा भूमौ पतन् ।) हा वत्स दुःशासन, हा मदाज्ञाविरोधितपाण्डव, हा विक्रमैकरस, हा मदङ्कदुर्ललित, हा अरातिकुलगजघटामृगेन्द्र, हा युवराज, क्वासि । प्रयच्छ मे प्रतिवचनम् ।

(इति निःश्वस्य मोहमुपगतः ।)

**सूतः**—राजन्, समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—(संज्ञा लब्ध्वा । निःश्वस्य ।)

मुक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाग्रजेन ।
अस्यास्तु वत्स तव हेतुरहं विपत्ते-
र्यत्कारितोऽस्यविनयं न च रक्षितोऽसि ॥ ६ ॥

(इति पतति ।)

**सूतः**—आयुष्मन्, समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—धिक्सूत, किमनुष्ठितं भवता ।

---

१. 'नाम'; 'क्रोधो न नाम करुणापि च ते न लज्जा' इत्यपि पाठः. २.'देव'. ३. 'संपूर्णप्रतिज्ञेन भूतमिदानीं वृकोदरेण । अत एवं ब्रवीमि', 'संपूर्णप्रतिज्ञेन भूत वृकोदरेण'; 'सपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यं वृकोदरहतकेन । यत एवं ब्रवीमि'; 'सपूर्णप्रतिज्ञेन निवृत्तेन भवितव्यं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि' इति नानाविधः पाठः. ४. 'युवः'. ५. ('इति पुनः पतति ।)'; ('इति मूर्च्छति ।)' ६. 'आयुष्मन्' समाश्वसिहि' इति क्वचित्पाठः.

रेक्षणीयेन सततं बालेनाज्ञानुवर्तिना ।
दुःशासनेन भ्रात्राहमुपहारेण रक्षितः ॥ ७ ॥

**सूतः**—महाराज, मर्मभेदिभिरिषुतोमरशक्तिप्रासवर्षैर्महारथानामपहत-चेतनत्वान्निश्चेष्ट इतो महाराज इत्यपहृतो मया रथः ।

**दुर्योधनः**—सूत, विरूपं कृतवानसि ।

तस्यैव पाण्डवपशोरनुजद्विषो मे
क्षोभैर्गदाशनिकृतैर्न वियोजितोऽस्मि ।
तोमेन नाभिशयितो रुधिरार्द्रशय्या
दुःशासनो यदहमीक्षु वृकोदरो वा ॥८॥

( नि:श्वस्य नभो विलोक्य । ) ननु भो हतविधे, कृपाविरहित, भरत-कुलविमुख,

अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः ।

**सूतः**—शान्तं पापं शान्तं पापम् । महाराज, किमिदम् ।

**दुर्योधनः**—

धौतिताशेषपत्र धोर्मे किं राज्येन जयेन वा ॥ ९ ॥

( ततः प्रविशति शरप्रहारव्रणबद्धपट्टिकालङ्कृतकायः सुन्दरकः । )

---

१ 'लालनीयेन' २ 'बालकेनानुवर्तिना' ३ 'उपकारेण' ४ 'दव' 'असितोमर-' ६ 'अपहृत-' ७ 'निश्चेतन' ८ 'क्षोदै' ९ 'यद्ये' 'अद्यैव', 'य येव' 'यच्चैव' १० 'अद्य' ११ 'पातिताशेषबन्धो' १ '(ततः प्रविशति सप्रहारः पुरुषः ।)' इति बहुपुस्तकानां पाठः १३ 'व्रणब' पट्टिकालङ्कृतशरीरः', 'व्रणबद्धपट्टिकालङ्कृतशरीरः'

**सुन्दरकः**—*अज्जा, अवि णाम इमस्सिं उद्देसे सारहिदुइओ दिट्ठो तुह्मेहिं महाराओ दुज्जोहणो । (निरूप्य ।) कह ण कोवि मन्तेदि । होदु । एदाणं बद्धपरिअराण पुरिसाण समूहो दीसइ । एत्थ गदुअ पुच्छिस्सम् । (परिक्रम्य विलोक्य च ।) कह एदे क्खु स्वसामिणो गाढप्पहारहदस्स वणसण्णाहजालदुब्भेजमुहेहिं कङ्कवत्तेहिं हिअआदो सल्लाइं उद्धरन्ति । ता णक्खु एदे जाणन्ति । होदु । अण्णदो विचिणइस्सम् । (अग्रतोऽवलोक्य किंचित्परिक्रम्य ।) इमे क्खु अवरे प्पहूददरा सगदा वीरमणुस्सा दीसन्ति । ता एत्था गदुअ पुच्छिस्सम् । (उपगम्य ।) हहो, जाणह तुम्हे कस्सिं उद्देसे कुरुणाहो वट्टइत्ति । कह एदे वि मं पेक्खिअ अहिअदरं रोअन्दि । (दृष्ट्वा ।) ता ण क्खु एदे वि जाणन्ति ।

---

* (क) आर्याः, अपि नामास्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिर्महाराजदुर्योधन । कथं न कोऽपि मन्त्रयते । भवतु एतेषां बद्धपरिकराणां पुरुषाणां समूहो दृश्यते । अत्र गत्वा प्रक्ष्यामि । कथमेते खलु स्वस्वामिनो गाढप्रहारहतस्य घनसन्नाहजालदुर्भेद्यमुखैः कङ्कपत्रैर्हृदयाच्छल्यान्युद्धरन्ति । तन्न खल्वेते जानन्ति । भवतु । अन्यतो विचेष्यामि । इमे खल्वपरे प्रभूततराः सगता वीरमनुष्या दृश्यन्ते । तदत्र गत्वा प्रक्ष्यामि । हहो, जानीथ यूयं कस्मिन्नुद्देशे कुरुनाथो वर्तत इति । कथमेतेऽपि मां प्रेक्ष्याधिकतरं रुदन्ति । तन्न खल्वेतेऽपि जानन्ति । हा, अतिकरुणं खल्वत्र वर्तते । एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया वध्वा सहानुम्रियते । साधु वीरमातः, साधु । अन्यस्मिन्नपि जन्मान्तरेऽनिहतपुत्रा भविष्यसि । भवतु ।

---

१. 'पुरुष.'. २. 'महाराअदुज्जोहणो ण वेत्ति'. ३ '(निरूप्य ।)' इति क्वचिन्नास्ति. ४. 'योइण'. ५. 'दीसइत्ति'. ६. '(विलोक्य ।)' ७. 'सामिणो'. ८. 'ता क्खु एदे ण जाणन्दि' इति पाठः. ९. '(अग्रतोऽवलोक्य किंचित्परिक्रम्य ।)' इति क्वचिन्नास्ति. १०. 'सगदा मणुस्सा दीसन्ति । ता एत्थ गदुअ'; 'सकलिदा वीरमाणुसा । ता एत्थ गदुअ'. ११. 'तुम्हे' इति क्वचिन्नास्ति. १२. 'देक्खिअ'.

हो, अदिकरुणं क्खु एत्थ वट्टइ। एसा वीरमादा समरविणिहद पुत्तअं सुणिअ रत्तंसुअणिवसणाए समग्गभूसणाए वहूए सह अणुमरदि। (सश्लाघम्।) साहु वीरमादे, साहु। अण्णस्सिं वि जम्मन्तरे अणिहदपुत्तआ हुविस्ससि। होदु। अण्णदो पुच्छिस्सम्। (अन्यतो विलोक्य।) अअं अवरो बहुप्पहारणिहदकाओ अकिदव्वणबन्धो एव्व जोहसमूहो इमं सुण्णासणं तुरङ्गमं उवालहिअ रोइदि। णूणं एदाणं एत्थ एव्व सामी वावादिदो। ता ण क्खु एदे वि जाणन्दि। होदु। अण्णदो गदुअ पुच्छिस्सम्। (सर्वतो विलोक्य।) कहं सव्वो एव्व अवत्थाणुरूअं व्वसणं अणुभवन्तो भाअधेअविसमसीलदाए पज्जाउलो जणो। ता कं दाणीं एत्थ पुच्छिस्सम्। कं वा उवालहिस्सम्। होदु। सअं एव्व एत्थ विचिणइस्सम्। (परिक्रम्य।) होदु। देव्वं दाणीं उवालहिस्सम्। हहो देव्व, एआदसाणं अक्खोहिणीणं णाहो जेट्ठो भादुसदस्स भत्ता गङ्गेअदोणङ्गराअसल्लकिवकिदवम्मअस्सत्थामप्पमुहस्स राअचक्कस्स सअलप्पुहवी-

---

अन्यत प्रक्ष्यामि। अयमपरो बहुप्रहारनिहतकायोऽकृतव्रणबन्ध एव योधसमूह इमं शून्यासनं तुरङ्गममुपालभ्य रोदिति। नूनमेतेषामत्रैव स्वामी व्यापादित। तन्न खल्वेतेऽपि जानन्ति। भवतु। अन्यतो गत्वा प्रक्ष्यामि। कथं सर्व एवावस्थानुरूपं व्यसनमनुभवन् भागधेयविषमशीलतया पर्याकुलो जन। तत्किमिदानीमत्र प्रक्ष्यामि। कं वोपालप्स्ये। भवतु। स्वयमेवात्र विचेष्यामि। भवतु। दैवमिदानीमुपालप्स्ये। हहो दैव, एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथ्वीमण्डलैकनाथो महाराजदुर्योधनोऽप्यन्विष्यते। अन्विष्यमाणोऽपि न ज्ञायते

---

१ 'हा, दुक्करं क्खु एत्थ वट्टइ' इति बहुपुस्तकानां पाठ २ 'पेक्खिदु ३ 'सुसरदि' ४ 'हुविस्ससि इत्यस्मादनन्तरं 'पुत्तो वि दे अखण्डिदयसो वीरो वेस्सदि' इति क्वचिदधिक पाठ ५ 'विचिणइस्सम्' ६ 'अवलोक्य' ७ 'किदव्वणप्पडिआरो ८ 'भागधेअविसुद्दाए' ९ 'दाणीं' इति क्वचिन्नास्ति

मण्डलेक्कणाहो महाराअदुज्जोहणो त्ति, अण्णेसीअदि । [1]अण्णेसीअन्तो वि ण जाणीअदि कस्सिं उद्देसे, वट्टइ त्ति । ([2]विचिन्त्य निःश्वस्य च ।) अह वा किं एत्थ देव्वं उवालहामि । तस्स क्खु एदं णिब्भच्छिअ-विउरवअणवीअस्स [3]अणग्घीरिटपिदामहहिदोवदेसकुरस्स [4]संउणिप्पोच्छा-हणादिनिरूढमूलस्स [5]जउगेहजूदविससाहिणो सभूदचिरआलसवद्धवे-रालवालस्स [6]पञ्चालीकेसग्गहणकुसुमस्स फलं परिणमदि । (अन्यतो विलोक्य ।) जहा एत्थ एसो विविहरअणप्पहासवलिदसूरकिरणप्पसूदस-क्कचावसहस्ससपूरिददसदिसामुहो ळणकेदुवसो रहो दीसइ ता अह तक्केमि अवस्स एदिणा महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वम् । [7]याव निरूपेमि । (उपागम्य दृष्ट्वा निःश्वस्य च ।) कधं एआदहाण अक्खो-हिणीण णाअको भविअ महाराओ दुज्जोहणो पउदपुरिसो विअ अस

कस्मिन्नुद्देशे वर्तत इति । अथ वा किमत्र दैवमुपालभे । तस्य खल्विदं निर्भर्त्सित-विदुरवचनबीजस्यावधीरित पितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनादिविरूढमू-लस्य जतुगृहद्यूतविषशाखिनः सभूतचिरकालसबद्धवैरालवालस्य पाञ्चालीकेश-ग्रहणकुसुमस्य फलं परिणमति । यथात्र विविधरत्नप्रभासवलितसूर्यकिरणप्रसूत-शक्रचापसहस्रसम्पूरितदशदिशामुखो ललनकेतुवशो रथो दृश्यते तदह तर्कयाम्यव-श्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम् । यावनिरूपयामि । कथमेकादशानामक्षौहिणीनां नायको भूत्वा महाराजो दुर्योधनः प्राकृतपुरुष इवा-

१. 'अण्णेसीअन्तो वि ण जाणीअदि । ण जाणे कस्सिं उद्देसे सो वट्टइ त्ति', 'ण जाणे कस्सिं उद्देसे सो वट्टइ त्ति' इति वा पाठः । २. '(विचिन्त्य निःश्वस्य च ।)' इत्यत्र '(विमृश्य ।)' इति क्वचित्पाठः । ३. 'परिभूदपिदामहहिदावद-सङ्कुरस्स' । ४ 'सउणिहदअप्पोच्छाहणादिविरूढमूलस्स', 'सउणिप्पोच्छाहणारूढ-मूलस्स' । ५. 'कुडविससाहिणो' इति दशरूपके पाठः । ६. 'पञ्चालिआकेसग्ग-हणकुसुमस्स' । ७ 'याव निरूवेमि' इत्यारभ्य 'अये, कथं समासा सुन्दरकः प्राप्तः' इत्यन्तं केषुचित्पुस्तकेषु नास्ति

लाहणीए भूमीए उवविट्ठो चिट्ठदि । अथवा तस्स क्खु एद पंचालीके-सग्गहकुसुमस्स फल परिणमदि । ( क )

( उपसृत्य सूत सञ्ज्ञया पृच्छति । )

**सूतः**—( दृष्ट्वा ) अये, कथ सग्रामा सुदरक प्राप्त ।

**सुन्दरकः**—( उपगम्य । ) जअदु जअदु महाराओ । ( ख )

**दुर्योधनः**—( विलोक्य । ) अये सुदरक, कच्चित्कुशलमङ्गराजस्य

**सुन्दरकः**—देव, कुसल सरीरमेत्तकेण । ( ग )

**दुर्योधनः**—किं किरीटिनास्य निहता धौरेया हत सारथिर्भग्नो वा रथ ।

**सुन्दरकः**—देव, ण भग्गो रहो । से मणोरहो (घ)

---

श्लाघनीयायां भूमावुपविष्टस्तिष्ठति । अथ वा तस्य खलु एतत् पाञ्चालीकेशग्रहकुसुमस्य फल परिणमति ।

( ख ) जयतु जयतु महाराज ।

( ग ) देव, कुशल शरीरमात्रकेण ।

( घ ) देव न भग्नो रथ । अस्य मनोरथ ।

---

१ 'पञ्चालिआकेसग्गहकुसुमस्स २ '( उपसृत्य दृष्ट्वा च । )' ३ 'महाराओ' इत्यस्मादनन्तर केपुचित् पुस्तकेषु 'सूत —(विलोक्य ।) आयुष्मन्, समरात्सुन्दरक प्राप्त इत्यधिक पाठ ४ 'सरीरमेत्तेण ५. 'राजा—( ससम्भ्रमम् ) सुन्दरक, किं किरीटिनाऽस्य निहता धौरेयाः', 'राजा—किं तस्य किरीटिना हता धौरेया ' इति पाठौ ६ 'देव, ण भग्गो रहो। से मणोरहो वि देव, ण रहो भग्गो । से मणोरहो वि 'देव ण भग्गो रहो । भग्गो से मणोरहो', 'देव, ण भग्गो रहो किं तु अङ्गाण सअलराअचक्कस्स मणोरहो' इति पाठान्तराणि

**दुर्योधनः**—किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम् । तदलं संभ्रमेण । अशेषतो विस्पष्टं कथ्यताम् ।

**सुन्दरकः**—जं देवो आणवेदि । देवस्स मुउडमणिप्पहावेण अवणीदा मे रणप्पहारवेअणा (इति साटोपं परिक्रम्य ।) सुणादु देवो । अत्थि दाणीं कुमालदुस्सासणवह—(इत्यर्धोक्ते मुखमाच्छाद्य शङ्कां नाटयति । )(क)

**सूतः**—सुन्दरक, कथय । कथितमेव देवेन ।

**दुर्योधनः**—कथ्यताम् । श्रुतमस्माभिः ।

**सुन्दरकः**—(स्वगतम् ।) कधं दुस्सासणवहो सुदो देवेण । (प्रकाशम् ।) सुणादु देवो । अज्ज दाव कुमालदुस्सासणवहामरिसिदेण सामिणा अङ्गराएण किदकुडिलभिउडीभङ्गभीसणललाडवट्टेण अविण्णादसंधाणतिक्खमोक्खणिक्खित्तसरधारावरिसिणा अभिजुत्तो सो दुराआरो दुस्सासणवेरिओ मज्झमपण्डवो । (ख)

---

( क ) यदेव आज्ञापयति देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना । शृणोतु देवः । अस्तीदानीं कुमारदुःशासनवध—

(ख) कथं दुःशासनवधः श्रुतो देवेन । शृणोतु देवः । अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कृतकुटिलभ्रुकुटीभङ्गभीषणललाटपट्टेनाविज्ञातसंधानतीक्ष्णमोक्षनिक्षिप्तशरधारावर्षिणाभियुक्तः स दुराचारो दुःशासनवैरी मध्यमपाण्डवः ।

---

१. 'दुर्योधनः—(सरोषम्) अरे, किमेवमस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि'; दुर्योधनः–किमविस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि'; 'राजा–किमेवमस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि' इति नानाविधः पाठः. २. 'तदलं संभ्रमेण । स्पष्टं कथय'; तदशेषतो विस्पष्टं कथ्यताम्' इति पाठौ. ३. 'अए, देवस्स मुउडमणिप्पहावेण'; देवस्स मुउडमणिदंसणप्पहावेण' ४. 'मुखमावृणोति' इति पाठः. ५. '(स्वगतम् । ) कधं दुस्सासणवहो सुदो देवेण । (प्रकाशम् )' इति केषुचित्पुस्तकेषु नास्ति. ६. 'कुमाल' इति क्वचिन्नास्ति. ७. 'किद' इति क्वचिन्नास्ति. ८. 'णिडलवट्टेण'; 'णिडालवट्टेण'. ९. 'अविण्णादसंधाणमोक्खेण सिलीमुहसंघादवरिसिणा अभिजुत्तो सो दुराआरो मज्झमपण्डवो भीमसेणहदओ' इति बहवः पाठाः.

उभौ—ततस्ततः ।

सुन्दरकः—तदो देव, उहअबलमिलन्तदीप्पन्तकरितुरअपदादिसमुब्भूदधूलिणिअरेण पल्लत्थगअघडासघादेण अ वित्थरन्तेण अन्धआरेण अन्धीकिद उहअबलम् । ण हु गगणतलं लक्खीअदि । (क)

उभौ—ततस्तत ।

सुन्दरक —तदो देव, दूराकड्ढिअधणुग्गुणाप्फालणटङ्कारेण गम्भीरभीसणेण जाणीअदि गज्जिद पलअजलहरेण त्ति । (ख)

दुर्योधन —ततस्तत ।

सुन्दरकः—तदो देव, दोहिण वि ताण अण्णोण्णासिंहणादगज्जिदपिसुण विविहपरिमुक्कप्पहरणाहदकरअसगलिदज्जलणविज्जुच्छडाभासुर

---

( क ) ततो देव, उभयबलमिलद्दीप्यमानकरितुरगपदातिसमुद्भूतधूलिनिकरेण पर्यस्तगजघटासघातेन च विस्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलम् । न खलु गगनतलं लक्ष्यते ।

( ख ) ततो देव, दूराकृष्टधनुर्गुणास्फालनटङ्कारेण गम्भीरभीषणेन ज्ञायते गर्जित प्रलयजलधरेणेति ।

---

१ 'दीप्पन्त' इति क्वचिन्नास्ति. २. 'णिवहेण'. ३. 'पळत्थतत्तद्दअघडा-', 'पसत्थगअघडा-' ४. 'विअ'. ५ 'ण भुवणतल लक्खीअदि' इति पाठः ६. 'धनुग्गुणच्छोटणटकारगम्भीरभीसणेण अन्धआरेण जाणीअदि', 'धणुग्गुणच्छोडणटकारगम्भीरभीसणेण भअआरिणा अन्धआरेण जाणीअदि' इति पाठौ. ७. 'तदो अ दव'. ८. 'वि' इति क्वचिनास्ति ९. 'सजलिदज्जलणविज्जुअ बहलआहिलबिन्दुसज्जोअभासुर गम्भीरत्थणिअचापजलहरप्पसरिदसरधारासहस्सवरिसदुद्दसण संभूद समरदुद्दिणम' इति बहुपुस्तकाना पाठः, संजनिदज्जलणविज्जुअ' इत्यत्र 'संजलिदज्जलणविज्जुलअ' इत्यपि क्वचित्पाठो दृश्यते

गम्भीरत्थणिअचापजलहर प्पसरन्तसरधारासहस्सवरिसं जाद समरदुद्दिणम् । (क)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो[1] देव, एदस्सिं अन्तरे जेट्ठस्स भादुणो परिभवस[2]ङ्किणा धणंजएण वज्जणिग्घादणिग्घोसविसमरसिदधअअग्गट्ठिदमहावाणरो[3] तुरङ्गमसंवाहणवावुदवासुदेवसंखचक्कासिगदालञ्छिदचदुव्वाहुदण्डो[4] आपूरिअपञ्चजण्णदेअदत्तताररसिदप्पडिरवभरिददसदिसामुहकुहरो[5] धाविदो त उद्देसं रहवरो[6] । (ख)

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—तदो भीमसेणधणंजएहिं अभिजुत्तं पिदर पेक्खिअ ससंभम विअलिअं अवघूणिअ रअणसीसअं आकण्णाकड्ढिदकोदण्डमं-

---

(क) ततो देव, द्वयोरपि तयोरन्योन्यसिंहनादगर्जितपिशुनं विविधपरिमुक्तप्रहरणाहतकवचसंगलितज्वलनविद्युच्छटाभासुर गम्भीरस्तनितचापजलधर प्रसरच्छरधारासहस्रवर्षि जातं समरदुर्दिनम् ।

(ख) ततो देव, एतस्मिनन्तरे ज्येष्ठस्य भ्रातु परिभवशङ्किना धनंजयेन वज्रनिर्घातनिर्घोषविषमरसितध्वजाग्रस्थितमहावानरस्तुरङ्गमसंवाहनव्यापृतवासुदेवशंखचकासिगदालाञ्छितचतुर्बाहुदण्ड आपूरितपाञ्चजन्यदेवदत्ततारर सितप्रतिरवभरितदशदिशामुखकुहरो धावितस्तमुद्देशं रथवरः ।

---

१. 'तदो अ देव'. २. 'पराभवसङ्किणा'. ३. 'वज्जणिग्घादणिग्घोसो विसमरसिदहरसिदहओ सिहरट्ठिदवाणरो'; 'वज्जणिग्घादणिग्घोसविसमरसिदरहसिदहओ सिहरट्ठिदवाणरो'; 'वज्जणिग्घादणिग्घोसविसमरहरसिदहओ सिहरट्ठिदवाणरो' इति नानाविधः पाठः. ४. 'तुरङ्गमधारणव्वावारिद–'. ५. 'सखचक्कगदासिलञ्छिदचउब्भउव्वाहुदण्डदुद्दंसणो' इति बहुपुस्तकाना पाठः. ६. 'रहो'. 'कठिणकोदण्डजीओ'.

ण्डलो दाहिणहत्तुक्खित्तसरपुखविघट्टणतुरराइदसारहीओ त देस उवगदो कुमालविससेणो । (क)

**दुर्योधनः**—( सावष्टम्भम् । ) ततस्तत ।

**सुन्दरकः**—तदो देव, सुआगदेण एव्व कुमालविससणेण महद-च्चरिअ किदम् । वेडुरिअसिलासामलमुसिणिद्धसल्लब-धेहिं कठिणकङ्क-पक्खकिसणाणणेहि सिलाणिसिदमसलुज्जलेहिं जह कुसुमिदो तरुवरो सिलीमुहेहि तह पच्छादिदो वणजअस्स रहवरो । ( ख )

**उभौ**—( सहर्षम् । ) ततस्तत ।

**सुन्दरकः**—तदो देव, तीक्खविक्खित्तणिसिदभल्लबाणवरिसिणा धणजएण ईसि विहसिअ भणिदम्—'अरे रे विससेणे, पिदुणो वि दाव दे ण जुत्त मह कुविदस्स अभिमुह ठादुम् । किं उण भवदो बालस्स । किं ता गच्छ । अवरेहिं कुमारेहिं सह गदुअ आओधेहि ।' एव्व नाअ णिसमिअ गुरुअणाहिक्खेवेण उद्दीविअकोवोपरत्तमुहमण्डल

(क) ततो भीमसेनधनजयाभ्यामभियुक्त पितर प्रेक्ष्य ससभ्रम विगलितमव-धूय रत्नशीर्षकमाकर्णाकृष्टकोदण्डमण्डलो दक्षिणहस्तोत्क्षिप्तशरपुखविघट्टनत्वरा-यितसारथिकस्त देशमुपगत कुमारवृषसेन ।

( ख ) ततो देव, स्वागतेनैव कुमारवृषसेनेन महदाश्चर्य कृतम् । वैडूर्यशि-लाश्यामलसुस्निग्धशल्यबन्धै कठिनकङ्कपक्षकृष्णाननै शिलानिशितमांसलो ज्ज्वलैर्यथा कुसुमितस्तरुवर शीलीमुखैस्तथा प्रच्छादितो धनजयस्य रथवरः ।

( ग ) ततो देव, तीक्ष्णविक्षिप्तनिशितभल्लबाणवर्षिणा धनजयेनेषद्विहस्य भणितम्—'अरे रे वृषसेन, पितुरपि तावत्ते न युक्त मम कुपितस्याभिमुख स्थातुम् । किं पुनर्भवतो बालस्य । तद्गच्छ । अपरै कुमारै सह गत्वायुध्यस्व ।

१ 'दाहिणहत्थविनिखित्तसरपुखबन्धणो विघट्टणतुवराइदसारहीओ' इत्यपर पाठ २ 'विदलिदसिहासामल—' ३ 'सिलाणिसिद—' ४ 'कुविदस्स' इति क्वचिन्नास्ति ५ 'सह गदुअ इति क्वचिन्नास्ति

विअम्भिअभिउडीभङ्गभीसणेण चावधारिणा कुमालविससेणेण मम्मभेदएहिं परुसविसमेहिं सुदिपधकिदप्पणएहिं णिब्भच्छिदो गण्डीवी वाणेहिं ण उण दुट्टवअणेहिं । ( क )

**दुर्योधनः**—साधु वृषसेन, साधु । सुन्दरक, ततस्ततः ।

**सुन्दरकः**—तदो देव, णिसिदसराभिघादवेअणोपजादमण्णुणा किरीटिणा चण्डगण्डीवजीआसद्दणिज्जिदवज्जणिग्घादघोसेण वाणाणिपडणपडिसिद्धदंसणप्पसरेण पत्थुदं सिक्खाबलाणुरूवं किं वि अच्चरिअम् । ( ख )

**दुर्योधनः**—( साकूतम् । ) ततस्ततः ।

**सुन्दरकः**—तदो देव, तं तारिसं पेक्खिअ सत्तुणो समरव्वावारचउरत्तणं अविभाविअतूणीरमुहधणुग्गुणगमणागमणसरसंधाणमोक्खचडुलकरअलेण कुमालविससेणेण वि सविसेसं पत्थुदं समलकम्म । (ख)

एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभ्रुकुटीभङ्गभीषणेन चापधारिणा कुमारवृषसेनेन मर्मभेदकैः परुषविषमैः श्रुतिपथकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्टवचनैः ।

( क ) ततो देव, निशितशराभिघातवेदनोपजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् ।

(ख) ततो देव, तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणीरमुखधनुर्गुणगमनागमनशरसंधानमोक्षचटुलकरतलेन कुमारवृषसेनेनापि सविशेष प्रस्तुतं समरकर्म ।

---

१. 'कुमालविससेणेण वि'. २. 'सुदवढकिदप्पणएहिं;' 'सुदिवहकिदप्पणएहिं' इति पाठौ. ३. 'दुट्ठअणेहिं'. ४. 'सुन्दरक' इति क्वचिन्नास्ति. ५. ' तदो अ देव'. ६. 'सिदसराभिघाद–'. ७. 'गण्डीविणा'. ८. 'तदो अ देव'. ९. 'तं पेक्खिअ तस्स सत्तुणो समरव्वावारचउरत्तणं'; तं अ तारिसं समरव्वारचउरत्तणं पेक्खिअ' इति पाठौ. १०. 'तूणीरमुहधणुग्गुणगमणागमणसरसंधाणमोक्खचडुलकरअलेण'; 'तूणीरमुहधणुग्गुणगमणागमणसरसंधाणचडुलकरअलेण;' इति पाठान्तरे.

**दुर्योधनः**—ततस्तत ।

**सुन्दरकः**—तदो देव, एत्थन्तरे विमुक्कसमरव्वावारो मुहुत्त[1]स्सामिदवेराणुबन्धो दोण वि कुरुराअपण्डवबलाणं 'साहु कुमालविससेण, साहु' त्ति किदकलअलो वीरलोओ अवलोइदुं पउत्तो । (क)

**दुर्योधन**—(सविस्मयम्) ततस्ततः ।

**सुन्दरकः**—तदो अ देव, [4]अवहीरिदसअलराअधाणुकचक्कपराक्कमसालिणो सुदस्स तहाविहेण समलकम्मालम्भेण हरिसरोसकरुणासंकडे [5]वट्टमाणस्स सामिणो अङ्गराअस्स णिवडिआ सरपद्धइ भीमसेणे [6]बाप्पपज्जाउला दिठ्ठी कुमालविससेणे । (ख)

**दुर्योधनः**(सभयम् ।) ततस्ततः ।

---

(क) ततो देव, अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्रामितवैरानुबन्धो द्वयोरपि कुरुराजपाण्डवबलयोः 'साधु कुमारवृषसेन, साधु' इति कृतकलकलो वीरलोकोऽवलोकयितुं प्रवृत्तः ।

(ख) ततश्च देव, अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिन सुतस्य तथाविधेन समरकर्मारम्भेण हर्षरोषकरुणासंकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने ।

---

१. 'तदो अ देव, परिसेसिदरणव्वावारेसु वि[?]व चिरणिघडिअवेराणुबन्धेसु कुरुराअपण्डवबलेसु साहु विससेण, साहु त्ति कलअ 'मुदरो वीरलोओ आलोइदुं पउत्तो'; पाठ.. २ 'सुपरिवत्तचिरआलसवट्टिदवेराणुबन्धो' इति पाठः. ३. 'कुरुपण्डवाण हि'. ४. 'अवहीरिदसअलधाणुक्कचक्क–'. 'करुणहरिसरोससकडे' – 'हरिसरोसकरुणा संकासकडे'. ५. अणुवट्टमाणस्स'. ६. ''बाप्पआउला'.

**सुन्दरकः**—तदो अ देव, उभअबलप्पउत्तसाहुकारामरिसिदेण गण्डीविणा तुरगेसु सारहिं पि रहवरे धणु पि जीआइं पि णलिन्दलञ्छणे सिदादवत्ते अ व्वावारिदो सम सिलीमुहासारो। (क)

**दुर्योधनः**—(सभयम्।) ततस्ततः।

**सुन्दरकः**—तदो देव, विरहो लूणगुणकोदण्डमेत्तपरिब्भमणव्वावारप्पडिसिद्धसरसंपादो मण्डलेहिं विआरिदुं पउत्तो कुमालो। (ख)

**दुर्योधन**—(साशङ्कम्।) ततस्ततः।

**सुन्दरकः**—तदो देव, सुदरहविद्धंसणामरिसिदेण सामिणा अङ्गराएण अगणिअभीमसेणाभिजोएण पडिमुक्को धणंजअस्स उवरि सिलीमुहासारो। कुमालो वि परिजणोवणीदं अण्णं रहं आरुहिअ पुणो वि पउत्तो धणंजएण सह आओधेदुम्। (ग)

---

(क) ततश्च देव, उभयबलप्रवृत्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि जीवायामपि नरेन्द्रलाञ्छने सितातपत्रे च व्यापारितः समं शिलीमुखासारः।

(ख) ततो देव, विरथो लूनगुणकोदण्डमात्रपरिभ्रमणव्यापारप्रतिषिद्धशरसंपातो मण्डलैर्विचरितुं प्रवृत्तः कुमारः।

(ग) ततो देव, सुतरथविध्वंसनामर्षितेन स्वामिनाङ्गराजेनागणितभीमसेनाभियोगेन परिमुक्तो धनंजयस्योपरि शिलीमुखासारः। कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनंजयेन सहायोधितुम्।

---

१. साहुकारामरिसिदेण सरवरिसपज्जलिदेण गण्डीविणा' इति बहवः. २. 'सिदादवत्ते व्वावारिदा समं सिलीमुहा' इत्यपर. पाठ. ३. 'लूणगुणकोदण्डो परिब्भमणमेत्तव्वावारो मण्डलाग्गेण विअरिदुं पउत्तो कुमालविससेणो'; 'लूणगुणकोदण्डा परिब्भमणव्वावारमेत्तप्पडिसिद्धसरसंपदो मण्डलाइं विरचइदुं पउत्तो कुमालो' इति पाठान्तरे. ४. 'दुर्योधन —अहो, बालस्य पराक्रमो मूढता च। उभौ—'ततस्ततः' इति क्वचित्पाठः. ५. 'विद्धंसणामरिसुद्दीविदेण'. ६. 'पडत्थो'. ७. 'कुमालविससेणो'. ८. 'धणंजआभिजोए'.

उभौ—साधु वृषसेन, साधु । ततस्ततः ।

सुन्दरकः—तदो देव, भणिदं च कुमालेण—'रे रे तादाहिक्खेवमुहल मज्झमपण्डव, मह सरा तुह सरीरं उज्झिअ अण्णस्सिं ण णिवडन्ति' त्ति भणिअ सरसहस्सेहिं पण्डवसरीरं पच्छादिअ सिंहणादेण गज्जिदुं पउत्तो । (क)

दुर्योधनः—(सविस्मयम् । ) अहो, बालस्य पराक्रमो मुग्धस्वभावेऽपि । ततस्ततः ।

सुन्दरकः—तदो अ देव, तं सरसपादं समवधूणिअ णिसिदसराभिघादजादमण्णुणा किरीटिणा गहिदा रहुच्छङ्गादो कणन्तकणअकिङ्किणीजालझङ्कारविराइणी मेहोवरोहविमुक्कणहत्थलणिम्मला णिसिदसामलसिणिद्धमुही णिविहरअणप्पहाभासुरभीसणरमणिज्जदंसणा सत्ती विमुक्का कुमालाहिमुही । (ख)

(क) ततो देव, भणितं च कुमारेण—'रे रे ताताधिक्षेपमुखर मध्यमपाण्डव, मम शरास्तव शरीरमुज्झित्वान्यस्मिन्न निपतन्ति' इति भणित्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः ।

(ख) ततश्च देव, तं शरसपातं समवधूय निशितशराभिघातजातमन्युना किरीटिना गृहीता रथोत्सङ्गात्क्वणत्कनककिंकिणीजालझंकारविराविणी मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिर्विमुक्ता कुमाराभिमुखी ।

१. 'उभौ—साधु वृषसेन' इत्यस्मादारभ्य 'सुन्दरकः—तदो देव' इत्यन्तं बहुषु पुस्तकेषु नास्ति. २ 'वज्जिअ' ३ 'भणन्तेण सरसहस्सेहिं पण्डवसरीरं पच्छादिदं कुमालेण ।' इति क्वचित्पाठः ४. 'मुग्धस्वभावस्यापि', 'मुग्धस्वभावोऽपि' ५ 'तस्स सरसहस्ससपादं समवधूणिअ', 'तस्सा सरसहस्सासपादं अवधूणिअ' ६ 'णिसिदसराभिघादजादमण्णुणा' इति क्वचिन्नास्ति ७. 'सत्ती सोवहासं विमुक्का अ धणंजएण कुमालाहिमुहम्' इति बहुपुस्तकानां पाठः

**दुर्योधनः**—(सविषादम् ।) अहह । ततस्ततः ।

**सुन्दरकः**—तदो देव, पज्जलन्तीं सत्तिं पेक्खिअ विअलिअं अङ्गराअस्स हत्थादो सैसरं धणु हिअआदो वीरसुलहो उच्छाहो णैअणादो बाप्पसलिलं पि । रसिदं अ सिंहणादं विओदलेण । दुक्करं दुक्करं त्ति आक्कन्दिदं कुरुवलेण । (क)

**दुर्योधनः**—(सविषादम् ।) ततस्ततः ।

**सुन्दरकः**—तदो देव, कुमालविससेणेण आँकण्णपूरिदेहिं णिसिदखुरप्पबाणेहिं चिरं णिज्झइअ अद्धपहे एव्व भाईरही विअ आअच्छन्ती जधा भअवदा विसमलोअणेण तधा तिधा किदा सत्ती । (ख)

**दुर्योधनः**—साधु वृषसेन, साधु । ततस्ततः ।

**सुन्दरकः**—तदो अ देव, एदस्सिं अन्तले ँकिदकलकलमुहरेण वीरलोअसाहुवादेण अन्तरिदो ँसमरतूरणिग्घोसो । सिद्धचालणगणविमुक्कुसुमप्पअरेण पच्छादिदं समलाङ्गणम् । भणिअं अ सामिणा अङ्गरा-

(क) ततो देव, प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशरं धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद्बाष्पसलिलमपि । रसितं च सिंहनादं वृकोदरेण । दुष्करं दुष्करमित्याक्रन्दितं कुरुबलेन ।

(ख) ततो देव, कुमारवृषसेनेनाकर्णपूरितैर्निशितक्षुरप्रबाणैश्चिरं निर्ध्यायार्धपथ एव भागीरथीवागच्छन्ती यथा भगवता विषमलोचनेन तथा त्रिधा कृता शक्तिः ।

१. 'दुर्योधनः—( सविषादम् ) अहह'; 'दुर्योधनः—( सविषादम् । ) ततस्ततः' इति पाठौ. २. 'सबाणं'. ३. 'णअणादो बाप्पसलिलं वअणादो रसिदम् । रसिदं अ धणंजएण सिंहणादं विणादिदं विओदलेन अ' इति बहुपुस्तकाना पाठः. ४. 'आकण्णाकिट्ठणिसिदखुरप्पेण सुचिरं विज्झइअ अद्धपहे एव्व भाईरही वेअ भअवदा विसमलोअणेण तिधा किदा सत्ती' इति बहुपुस्तकानां पाठ.. ५. 'कलमुहरेण'. ६. 'समरतूररवो'. ७. 'विमुक्केण कुसुमप्पअरेण'.

एण—'भो वीर विकोदल, असमत्तो तुह मह वि समलव्वावारो। ता [1]अणुमण्ण मं मुहुत्तअम्। पेक्खामहे [2]दाव वस्सस्स तुह भादुणो अ धणुव्वेदसिक्खाचउरत्तणम्। [3]तुह वि एदं पेक्खणिज्जम्' त्ति। (क)

**दुर्योधनः**—ततस्ततः।

**सुन्दरकः**—तदो देव, विस्समिदाओधनव्वावारा मुहुत्तविस्समिदणिअवेराणुबन्धा दुवे वि पेक्खआ जादा भीमसेणाङ्गराआ। (ख)

**दुर्योधनः**—( [4]साभिप्रायम्। ) ततस्ततः।

**सुन्दरकः**—[5]तदो अ देव, सत्तिखण्डणामरिसिदेण गण्डीविणा भणिअम्—'अरे रे दुज्जोहणप्पमुहा—( इत्यर्धोक्ते लज्जां नाटयति। ) (ग)

**दुर्योधनः**—सुन्दरक, कथ्यताम्। [6]परवचनमेतत्।

---

(क) ततश्च देव, एतस्मिन्नन्तरे कृतकलकलमुखरेण वीरलोकसाधुवादेनान्तरितः समरतूर्यनिर्घोषः। सिद्धचारणगणविमुक्तकुसुमप्रकरेण प्रच्छादितं समराङ्गणम्। भणितं च स्वामिनाङ्गराजेन—'भो वीर वृकोदर, असमाप्तस्तव ममापि समरव्यापारः। तदनुमन्यस्व मा मुहूर्तम्। प्रेक्षावहे तावद्वत्सस्य तव भ्रातुश्च धनुर्वेदशिक्षाचतुरत्वम्। तवाप्येतत्प्रेक्षणीयम्' इति।

( ख ) ततो देव, विश्रमितायोधनव्यापारौ मुहूर्तविश्रमितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ।

( ग ) ततश्च देव, शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—'अरे रे दुर्योधनप्रमुखा —

---

१. 'अणुमण्णदु'. २. 'दाव वक्खणमेत्त वस्सस्स तुह भादुणो धणुव्वेदसिक्खाणिउत्तणम्' इति पाठ. ३. 'तुह वि एदं पेक्खणिज्ज त्ति। तदो विरदाओ रणव्वावारणिब्बन्धादो मुहुत्तअ परसमिदवेरा जादा दुवे वि अ पेक्खआ भीमसेणाङ्गराआ'; ४ '( साभिप्रायम्। )' इति क्वचिन्नास्ति. ५. 'तदो अ देव, एदस्सिं अन्तरे सत्तिखण्डणामरिसिदेण गण्डीविणाम एव्वं भणिअम्' इति पाठ. ६. 'परवचनमत्र को दोषः' इति पाठः.

**सुन्दरकः**—सुणादु देवो । 'अरे दुज्जोहणप्पमुहा कुरुबलसेणापहुणो, अविणअणोकण्णधार कण्ण, तुह्मेहिं मह परोक्खं बहुहिं महारहेहिं पडिवारिअ एआई मम पुत्तओ अहिमण्णू व्वावादिदो । अहं उण तुह्माणं पेक्खन्ताणं एव्व एदं कुमालविससेणं सुमरिदव्वसेसं करोमि' त्ति भणिअ सगव्वं आप्फालिद णेण वेज्जणिग्घादघोसभीसणजीआरवं गण्डीवम् । सामिणा वि सज्जीकिदं काल्पुट्ठम् । (क)

**दुर्योधनः**—( सावहित्थम् । ) ततस्ततः ।

**सुन्दरकः**—तदो अ देव, पडिसिद्धभीमसेणसमलकम्मालम्भेण गण्डीविणा विरइदा अङ्गराअविससेणरहकूलकसाओ दुवे बाणणदीओ । तेहिं वि दुवेहिं अण्णोण्णदंसिदसिक्खाविसेसेहिं अभिजुत्तो सो दुराआरो मज्झमपण्डवो । (ख)

**दुर्योधनः**—ततस्ततः ।

---

(क) शृणोतु देवः । 'अरे, दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः, अविनयनौकर्णधार कर्ण, युष्माभिर्मम परोक्षं बहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादितः । अहं पुनर्युष्माकं प्रेक्षमाणानामेवैतं कुमारवृषसेनं स्मर्तव्यशेषं करोमि । इति भणित्वा सगर्वमास्फालितमनेन वज्रनिर्घातघोषभीषणजीवारवं गाण्डीवम् । स्वामिनापि सज्जीकृतं कालपृष्ठम् ।

(ख) ततश्च देव, प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचिते अङ्गराजवृषसेनरथकूलकषे द्वे बाणनद्यौ । ताभ्यामपि द्वाभ्यामन्योन्यदर्शितशिक्षाविशेषाभ्यामभियुक्तः स दुराचारो मध्यमपाण्डवः ।

---

१. 'अरे अविणअणईकण्णधार कण्ण' इति पाठः. २. 'मह परोक्खं एआई पुत्तओ अहिमण्णु व्वावादिदो' इति पाठः. ३. 'एव्व' इति क्वचिन्नास्ति. ४. 'सुमरिदव्वमेत्तसेसं'. ५. 'णिग्घादघोसभीसणजीआरवं'. ६. '(सावहित्थम् ।)' इति क्वचिन्नास्ति. ७. 'अण्णोण्णसिणेहदंसिद-'. ८. 'सो दुराआरो' इति क्वचिन्नास्ति.

**सुन्दरकः**—तदो अ देव, गण्डीविणा तारसिदनीआणिग्घोसमे त्तविण्णादवाणवरिसेण तह आअरिदं पत्तिहिं जह ण णहत्तल ण साम णरहो ण धरणी ण कुमालो ण केदुवसो ण बलाइं ण सारही [1] तुलङ्गमा ण दिसाओ ण वीरलोओ अ लक्खीअदि। (क)

**दुर्योधनः**—( सविस्मयम्। ) ततस्तत।

**सुन्दरकः**—[3]तदो अ देव, अदिक्कन्ते सरवरिस क्खणमेत्त सर्सिह णादे पण्डवबले विमुक्काकन्दे कोरवबले उत्थिदो महन्तो कलअलो [4] हदो कुमालविससेणो हा हदो त्ति। (ख)

**दुर्योधनः**—( [5]सबाष्परोधम्। ) ततस्तत।

**सुन्दरकः**—[6]तदो देव, महन्तीए वेलाए पेक्खिअ हदसारहितुलङ्ग लूणादवत्तकेदुवस सग्गप्पब्भट्टं विअ सुलकुमालं एक्केण ज्जेव मम्मभेदि णा सिलीमुहेण भिण्णदेहं रहमज्झे परिट्ठिदं कुमालं आअदो। (ग)

---

(क) ततश्च देव, गाण्डीविना तारसितज्यानिर्घोषमात्रविज्ञातबाणवर्षेण तथा चरितं पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतु वशो न बलानि न सारथिर्न तुरङ्गमा न दिशो न वीरलोकश्च लक्ष्यते।

(ख) ततश्च देव, अतिक्रान्ते शरवर्षे क्षणमात्रं समिंहनादे पाण्डवबले विमुक्ता क्रन्दे कौरवबले उत्थितो महान्कलकलो हा हतः कुमारवृषसेनो हा हत इति।

(ग) ततो देव, महत्या वेलया प्रेक्ष्य हतसारथितुरङ्गं लूनातपत्रकेतुवश स्वर्गप्रभ्रष्टमिव सुरकुमारमेकेनैव मर्मभेदिना शिलीमुखेन भिन्नदेहं रथमध्ये परि स्थितं कुमारमागतः।

---

१ 'तुलङ्गमो' २ 'मलक्खीअदि' ३ 'तदो अ दव, क्खणमेत्त एव्व अदिक्कन्ते सरसपादे सहपरिससिंहणादे पण्डवसण्णे सविसादविमुक्काकन्दे कोरवबले समुत्थिदो' इति बहुव पाठः ४ 'हदो कुमालविससेणो त्ति' इति पाठः ५ '( सबाष्परोधम्। )' इति पाठः ६. 'तदो अ देव, पक्खामि कुमालं हदसारहितुलङ्ग लूणादवत्तावचामरकेदुवसं सग्गब्भट्ठं विअ सुलकुमालं हिअ- अमम्मभेदिणा एक्केण सिलिमुहेण भिण्णदेहं रहमज्झे पल्लत्थम्।',

**दुर्योधनः**—( सास्रम् । ) अहह कुमारवृषसेन । अलमतः परं श्रुत्वा ।
। वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलप्र-
ाह, हा प्रियदर्शन, हा दुःशासननिर्विशेष, हा सर्वगुरुवत्सल, प्रयच्छ
। प्रतिवचनम् ।

पर्यासितनेत्रमचिरोदितचन्द्रकान्त-
मुद्भिद्यमाननवयौवनरम्यशोभम् ।
प्राणापहारपरिवर्तितदृष्टि दृष्ट
कर्णेन तत्कथमिवाननपङ्कजं ते ॥ १० ॥

**सूतः**—आयुष्मन्, अलमत्यन्तदुःखावेगेन ।

**दुर्योधनः**—सूत, पुण्यवन्तो हि दुःखभाजो भवन्ति । अस्माकं पुनः
प्रत्यक्षं हतबन्धूनामेतत्परिभवाग्निना ।
हृदयं दह्यतेऽत्यर्थं कुतो दुःखं कुतो व्यथा ॥ ११ ॥

इति मोहमुपगतः । )

**सूतः**—समाश्वसितु समाश्वसितु महाराजः । ( इति पटान्तेन
ोजयति । )

---

१. 'राजा—सुन्दरक, अलमिदानीं कथितेन । (सास्रम् ।) हा वत्स वृषसेन,
ासि । देहि मे प्रतिवचनम् । ( इति मोहमुपागतः । ) सूतः—समाश्वसिहि
माश्वसिहि । राजा—( उत्थाय । सकरुणम् । ) हा वत्स वृषसेन, हा मदङ्कदु-
र्लित, हा गदायुद्धप्रिय, हा राधेयकुलद्रुमप्ररोह' इत्यपि क्वचित्पाठः. २.
प्राणापचारपरिवर्तितदृष्टि'. ३. 'अत्यन्तशोकावेगेन'; 'अत्यन्तं दुःखावेगेन'.
. 'सूत, पुण्यवन्तो दुःखभाजो भवन्ति । अस्माकं च' इति क्वचित्पाठः. ५
प्रत्यक्षहतबन्धूनां'. ६. 'ध्यर्थं'. ७. 'कुतो दुःखं कुतो व्यथा ॥ भद्र सुन्दरक,
तो वयस्येन किं प्रतिपन्नमङ्गराजेन' इति क्वचित्पाठः. ८. '( इति पटान्तेन
ीजयति । )' इत्यस्मादनन्तरं 'आयुष्मन्, अलमत्यन्तदुःखावेगेन ।' इति
्वचिदधिकः पाठः.

**दुर्योधनः**—(लब्धसंज्ञ ।) भद्र सुन्दरक, ततो वयस्येन किं प्रतिपन्नमङ्गराजेन ।

**सुन्दरकः**—तदो अ देव, तधाविधस्स पुत्तस्स दसणेण सगलिद अंस्सुजाद उज्झिअ अणवेक्खिदपरप्पहरणाओएण सामिणा अभिजुत्ता धणजओ । त अ सुदवहामरिसुद्दीविदपरक्कम तह परिक्कमन्त पेक्खिअ णउलसहदेवपञ्चालप्पमुहेहिं अन्तरिदो धणजअस्स रहवरो । (क)

**दुर्योधनः**—ततस्तत ।

**सुन्दरकः**—तदो देव, सल्लेण भणिदम्—'अङ्गराअ, ईदतुलङ्गमो भग्गकुवरो दे रहो ण जोग्गो भीमाज्जुणेहिं सह आजुज्झिदुम्' त्ति पडिवट्ठिदो रहो ओदारिदो सामी सन्दणादो बहुप्पआर अ सेमस्सासिदो।

---

(क) ततश्च देव, तथाविधस्य पुत्रस्य दर्शनेन सगलितमश्रुजातमुज्झित्वानवेक्षितपरप्रहरणाभियोगेन स्वामिनाभियुक्तो धनजय । त च सुतवधामर्षोद्दीपित पराक्रम तथा परिक्रामन्त प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनजयस्य रथवर ।

---

१ 'भद्र सुन्दरक, वयस्येन किं प्रतिपन्नमङ्गराजेन' २ 'तह हदस्स पुत्तस्स तधाविधस्स सुदस्स' ३ 'अस्सुजल' ४ 'अणवेक्खिदपरप्पहरणेण सामिणा अङ्गराएण अभिजुत्तो धणजओ । तदो त सुदवहामरिसिद्ध विमुक्कजीविदास तथा परिक्कमन्त', ५ 'भीमणउलसहदेवपञ्चालप्पमुहेहिं' ६ 'रहो' ७ 'तदो अज्जुणचावमहाप्पलअपओहर णिस्सरिदसरधारासहस्सेहिं पूरिदेसु दिसामुहेसु सल्लेण भणिदोसामी अङ्गराओ । जहा अङ्गराअ' इति बहुपुस्तकानां पाठ ८ 'वसुभिदतुलङ्गमो मथिदचक्कणेमिकूबरो दे रहो । ता ण जुत्त भीमाज्जुणेहिं सह आजुज्झिदु त्ति भणिअ णिवट्टिदो रहो समराङ्गणादो' ९ 'आस्सासिदो । दुर्योधन —ततस्त । सुन्दरक —तदो अ सामिणा सुइरं विलम्बिअ पारअणो अभिहिदे अण्ण रह मे उवणेहि त्ति । परिऊणोवणीद रह पेक्खिअ मइ दिण्णदिट्ठी सुन्दरअ, एहि त्ति भणिअ अ । अह उवगदो समीवम्',

दो अ सामिणा सुइरं विलविअ परिअणोवणीदं अण्णं रहं पेक्खिअ दीहं निस्ससिअ मइ दिट्ठी विणिक्खिविदा । सुन्दरअ, एहि त्ति भणिदं अ । तदो अहं उवगदो सामिसमीवम् । तदो अवणीअ सीसट्ठाणादो पट्टिअं सरीरसंगलिदेहिं सोणिअबिंदुहिं लित्तमुहं बाणं कदुअ अहिलिहिअ पेसिदो देवस्स संदेसो (इति पट्टिकामर्पयति ।) (क)

( दुर्योधनो गृहीत्वा वाचयति । )

यथा— 'स्वस्ति, महाराजदुर्योधनं समराङ्गणात्कर्ण एतदन्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति ।

अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमा-<br>
न्भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः ।<br>
यैत्संभावित इत्यहं न च हतो दुःशासनारिर्मया<br>
त्वं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥ १२ ॥

**दुर्योधनः**—वयस्य कर्ण, किमिदं भ्रातृशतवधदुःखितं मामपरेण विशल्येन घट्टयसि । भद्र सुन्दरक, अथेदानीं किमारम्भोऽङ्गराजः ।

---

(क) ततो देव, शल्येन भणितम्—'अङ्गराज, इततुरङ्गमो ममकूवरस्ते रथो न योग्यो भीमार्जुनाभ्यां सहायोद्धुम्' इति परिवर्तितो रथोऽवतारितः स्वामि स्यन्दनाद्बहुप्रकारं च समाश्वासितः । ततश्च स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथं प्रेक्ष्य दीर्घं निःश्वस्य मयि दृष्टिर्विनिक्षिप्ता । सुन्दरक, एहीति भणितं च । ततोऽहमुपगतः स्वामिसमीपम् । ततोऽपनीय शीर्षस्थानात्पट्टिकां शरीरसंगलितैः शोणितबिन्दुभिर्लिप्तमुखं बाणं कृत्वाभिलिख्य प्रेषितो देवस्य संदेशः ।

---

१. 'दिट्ठवअणं'. २. 'अहिलिहिदो एसो देवस्स संदेशो'; ३. '(इति पत्रिकामर्पयति ।)', ४. 'महाराज दुर्योधन'. ५. 'त्वत्संभावित इत्यहं' इति पाठः. ६. 'तं'. ७. 'वयस्य कर्ण कर्ण' इति पाठः ८. 'भ्रातृशतवधदुःसहदुःखितं'; 'हतभ्रातृशतं'.

**सुन्दरकः**—देवे, अज्जवि आरम्भो पुच्छीअदि । अवणीदसरीर रणो अप्पवहकिदणिच्चओ पुणोवि पत्थेण सह समलं मग्गदि । (क)

[2]**दुर्योधनः**—( आवेगादासनादुत्तिष्ठन् । ) सूत, रथमुपनय । सुन्दरक, त्वमपि मद्वचनात्त्वरिततर गत्वा वयस्यमङ्गराज प्रतिबोधय । अलमतिसाहसेन । अभिन्न एवायमावयो सकल्प । न खलु भवानेको जीवितपरित्यागाकाक्षी । किंतु ।

हत्वा पौर्थान्सलिलमशिव बन्धुवर्गाय दत्त्वा
मुक्त्वा बाष्प सहकातिपयैर्मन्त्रिभिश्चारिभिश्च ।
कृत्वान्योन्य सुचिरमपुनर्भावि गाढोपगूढ
सत्यक्ष्यावो हततनुमिमा दुंखितौ निर्वृतौ च ॥ १३ ॥

अथवा [6]शोक प्रति मया न किचित्सदेष्टव्यम् ।
वृपसेनो न ते पुत्रो न मे दु शासनोऽनुज ।
[7]त्वा बोधयिष्ये यदह मा त्व वा वोधयिष्यसि ॥ १४ ॥

(क) देव, अद्याप्यारम्भ पृच्छयते । अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गति ।

१. 'देव, अदणोदसरीरावरणो अप्पवहकिदणिच्चओ सअ एव्व समल मग्गदि' इति पाठ . २. 'दुर्योधन —(श्रुत्वा सत्वरमुत्तिष्ठन् ।) सुन्दरक, त्वमपि मद्वचनात्त्वरिततर गत्वा वयस्यमङ्गराज प्रबोधय । न खलु जयाकांक्षी भवानिदानीम् । अभिन्न एवायमावयो सकल्प । किंतु ' इति पाठ . ३ 'पार्थ'. ४. ५. 'बन्धुभि '. ' ५ 'दुखितौ निर्वृतौ वा', ६. 'कर्णं प्रति' 'सशोक प्रति'; ७ 'त्वां बोधयामि किमहं त्व मां सत्यापयिष्यसि' इति

**सुन्दरकः**—जं देवो आणवेदि । (इति निष्क्रान्तः ।) (क)

**दुर्योधनः**—तूर्णमेव रथमुपस्थापय ।

**सूतः**—(कर्णं दत्त्वा ।) देव, हेषासंवलितो नेमिध्वनिः श्रूयते । तथा तर्कयामि नूनं परिजनोपनीतो रथः ।

**दुर्योधनः**—सूत, गच्छ त्वं सज्जीकुरु ।

**सूतः**—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनः प्रविशति ।)

**दुर्योधनः**—(विलोक्य ।) किमिति नारूढोऽसि ।

**सूतः**—एष खलु [1]तातोऽम्बा च [2]संजयाधिष्ठितं रथमारुह्य देवस्य [3]समीपमुपगतौ ।

**दुर्योधनः**—[4]किं नाम तातोऽम्बा च संप्राप्तौ । [5]कष्टमतिबीभत्समाचरितं दैवेन । सूत, गच्छ त्वं स्यन्दनं तूर्णमुपहर । अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि ।

**सूतः**—देव, [6]त्वदेकशेषबान्धवावेतौ कथमिव न समाश्वासयसि ।

**दुर्योधनः**—सूत, कथमिव समाश्वासयामि [7]विमुखभागधेयः । पश्य ।

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
भ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च ।

---

(क) यद्देव आज्ञापयति ।

---

१. 'तातो धृतराष्ट्रोऽम्बा च'. २. 'संजयाधिरूढं रथमारूढौ देवसकाशमनुप्राप्तौ'; ३. 'समीपमागतौ'. ४. 'किं नाम तातोऽम्बा च संप्राप्तौ' इति पाठः केषुचित्पुस्तकेषु नास्ति. ५. अहो, अतीव बीभत्समाचरितं दैवेन । सूत, स्यन्दनमुपहार' इति पाठः ६. 'त्वदेकबान्धवौ'. ७. 'मन्दभाग्यः'.

तस्मिन्काले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वे पित्रोरपगतघृणः किंनु वक्ष्यामि गत्वा ॥ १५ ॥

तथाप्यवश्यं वन्दनीयौ गुरू ।

(इति निष्क्रान्तौ ।)

इतिचतुर्थोऽङ्कः ।

---

१. 'पार्श्वे पित्रोरहमपघृणः किंनु वक्ष्यामि गत्वा'; 'पार्श्वे पित्रोरहमुपगतः किं नु वक्ष्यामि ताभ्याम्'; 'पार्श्वे पित्रोरहमुपगतः किंनु वक्ष्यामि गत्वा' इति पाठान्तराणि.

## पञ्चमोऽङ्कः ।

( ततः प्रविशति [1]रथयानेन गान्धारी संजयो धृतराष्ट्रश्च । )

**धृतराष्ट्रः**—[2]वत्स संजय, कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनस्तिष्ठति । कच्चिज्जीवति वा न वा ।

**गान्धारी**—[3]जाद, जइ सच्चं [4]जीवदि मे वच्छो ता कधेहि कस्सिं देसे वट्टदि । (क)

**संजयः**—[5]नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

**गान्धारी**—[6]( सकरुणम् । ) जाद, एआइ त्ति भणासि । [7]किं णु क्खु संपदं भादुसदं से पास्से भविस्सदि । (ख)

**संजयः**—तात, अम्ब, [8]अवतरतं स्वैरं रथात् ।

( [9]उभाववतरणं नाटयतः । )

( ततः प्रविशति [10]सैन्योडुपविष्टो दुर्योधनः । )

**संजयः**—( [11]उपसृत्य । ) विजयतां महाराजः । [12]नन्वेष तातोऽम्बया सह प्राप्तः [13]किं न पश्यति महाराजः ।

---

(क) जात, यदि सत्यं जीवति मे वत्सस्तत्कथय कस्मिन्देशे वर्तते ।

(ख) जात, एकाकीति भणसि । किं नु खलु सांप्रतं भ्रातृशतमस्य पार्श्वे भविष्यति ।

---

१. 'स्यन्दनयानेन'. २. 'वत्स संजय, कुरुकुलकाननैकशेषप्रवालो मे वत्सो दुर्योधनः'; 'संजय, कथय कथय कस्मिन्नुद्देशे सकलकुलकाननैकपल्लवो वत्सो मे दुर्योधनः ।'; इति पाठान्तराणि. ३. 'जाद' इति क्वचिन्नास्ति. ४. जीवदि सो मे वच्छो कहेहि तं उद्देसम्'; ५. 'तात, अम्ब, नन्वेष महाराजः' इति पाठः. ६. 'गान्धारी-( सास्रम् । ) जाद, एआइ त्ति भणासि'; ७. किं णु क्खु सांवदं भादुसदं से पास्सेण्ठिय';८. 'अवतरतं रथात्';९. '(सर्वेऽवतरणं नाटयन्ति ।)' इति पाठः; १०. 'सक्रोडोपविष्टः'. ११. '(उपगम्य । )'. १२. 'ननु' इति क्वचिन्नास्ति. १३. 'किं न पश्यसि महाराज'.

( दुर्योधनो वैलक्ष्यं नाटयति । )

धृतराष्ट्रः—

शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे कृतापाश्रये ।
दूरान्निर्जितशात्रवान्स्पर्शनालोकयल्लीलया
सद्यः पुत्रक वेदनेति न मया पापेन पृष्टो भवान् ॥ १ ॥

( धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्यालिङ्गतः । )

गान्धारी—वच्छ, अदिगाढप्पहारवेअणापज्जाउलस्स अह्मेसु सण्णिहिदेसु त्ति ण प्पसरदि दे वाणी । (क)

धृतराष्ट्रः—वत्स दुर्योधन, किमकृतपूर्वं संप्रति मय्यप्ययमव्याहारः ।

गान्धारी—वच्छ, जइ तुमं वि अह्मे णालवसि ता किं संपदं वच्छो दुस्सासणो आलवदि अध दुम्मरिसणो वा अण्णो वा । (ख) (इति रोदिति ।)

दुर्योधनः—

जातोऽहमप्रतिकृतानुजनाशदर्शी
तातस्य बाष्पपयसा तव चाम्ब हेतुः ।

---

(क) वत्स, अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी ।

(ख) वत्स, यदि त्वमप्यस्मान्नालपसि तर्कि सांप्रतं वत्सो दुःशासन आलपत्यथ दुर्मर्षणो वान्यो वा ।

---

१ 'कृतोपाश्रये' २ 'निर्जितसान्त्वितान्' ३ 'दृष्ट' ४ 'स्पर्शेनोपेत्य परिष्वजेते' इति पाठः ५ 'गाढप्पहार—' ६ 'किमकृतपूर्वं संप्रति मय्यव्यवहारः', ७ 'गान्धारी—( सकरुणम् । ) वच्छ' इति क्वचित्पाठः, ८ दुर्योधनः —अम्ब' इति क्वचित्पाठः ९ 'पाप', 'योध'.

दुर्ज्ञानमत्र विमले भरतान्वयेऽपि
किं मां सुतक्षयकरं सुत दर्शयन्ति ॥ २ ॥

**गान्धारी**—जाद, अलं परिदेविदेण । तुमं वि दाव पुत्तओ इमस्स अन्धजुअलस्स मग्गोवदेसओ । ता चिरं जीव । किं मे रज्जेण जणेण वा । (ख)

**दुर्योधनः**—

मातः किमप्यसदृशं कृपणं वचस्ते
सुक्षत्रियाः क्व भवती क्व च दीनतैषा ।
निर्वत्सले सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयसि रक्षसि मामयोग्यम् ॥ ३ ॥

**धृतराष्ट्रः**—(दुर्योधनं परिष्वज्य।) [1]वत्स, समाश्वसिहि। [2]समाश्वासय चास्मानिमामतिदीनां मातरं च।

**दुर्योधनः**—तात, [3]दुर्लभः समाश्वास इदानीं युष्माकम्। किंतु

कुन्त्या सह युवामद्य मया निहतपुत्रया।
विराजमानौ [4]शोकेऽपि तनयाननुशोचतम्॥ ४॥

**गान्धारी**—[5]जाद, एद एव्व सपदं प्पभूदं [6]जं तुमं वि दाव एक्को णाणुसोचइदव्वो। ता जाद प्पसीद। एसो दे सीसञ्जली। णिवट्टीअदु समरव्वावारादो। अपच्छिमं करेहि पिदुणो वअणम्। (क)

**धृतराष्ट्रः**—वत्स, श्रृणु वचनं [7]तवाम्बाया [8]मम च निहताशेषबन्धुवर्गस्य। [9]पश्य।

(क) जात, एतदेव सांप्रतं प्रभूतं यत्त्वमपि तावदेको नानुशोचितव्यः। तज्जात, प्रसीद। एष ते शीर्षाञ्जलिः। निवर्त्यतां समरव्यापारात्। अपश्चिमं कुरु पितुर्वचनम्।

१ 'वत्स, समाश्वसिहि समाश्वसिहि' इति क्वचित्पाठः. २. 'समाश्वासय मां जननीं च', 'समाश्वासय च मामिमामतिदीनां मातरं ते च', ३ 'दुर्लभमिदानीं पुनः समाश्वासनं युष्माकम्' इति पाठः ४. 'लोके' ५ 'जाद, दाणीं एद एव्व सपदं प्पभूदं', ६. 'जं तुमं वि दाव एक्को जीवसि। कं अण्णं अणुसोचिस्सम्। ता जाद, अक्कालो दे समरस्स। प्पसीद। एसो दे अञ्जली। णिवट्टेहि समरव्वावारादो। अपच्छिमं करेहि वअणम्।', 'तुमं वि दाव एक्को णाणुसोचइदव्वो। ता जाद, प्पसीद। एसो दे सीसञ्जली। णिवट्टीअदु समरव्वावारदो। अवस्सं पिदुणं वअणं करेहि।' ७ 'तव' इति क्वचिन्नास्ति. ८ 'ममापि च निहताशेषबन्धुवर्गस्य', मम च निहतसकलबन्धुवर्गस्य', 'मम सकलबान्धवस्य च' ९ 'पश्य' इत्यत्र 'अपि च तात दुर्योधन' इति क्वचित्पाठः.

दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत्फाल्गुनात् ।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥ ४ ॥

**दुर्योधनः**—समरात्प्रतिनिवृत्य किं मया कर्तव्यम् ।

**गान्धारी**—जाद, जं पिदा दे विउरो वा भणदि । (क)

**संजयः**—देव, एवमिदम् ।

**दुर्योधनः**—संजय, अद्याप्युपदेष्टव्यमस्ति ।

**संजयः**—देव, यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीषुः प्रज्ञावताम् ।

**दुर्योधनः**—( सक्रोधम् । ) शृणुमस्तावद्भवत एव प्रज्ञावतोऽस्मान्प्रति प्रतिरूपमुपदेशम् ।

---

(क) जात, यत्पिता ते विदुरो वा भणति ।

**धृतराष्ट्रः**—वत्स, युक्तवादिनि संजये किमत्र क्रोधेन । यदि प्रकृतिमापद्यते तदहमेव भवन्त ब्रवीमि । श्रूयताम् ।

**दुर्योधनः**—कथयतु तात ।

**धृतराष्ट्रः**—वत्स, किं विस्तरेण । सधत्ता भवानिदानीमपि युधिष्ठिरमीप्सितपणबन्धेन ।

**दुर्योधनः**—तात, तनयस्नेहवैक्लव्यादम्बा बालिशत्वेन संजयश्च काममेव ब्रवीतु । युष्माकमप्येव व्यामोह । अथवा प्रभवति पुत्रनाशजन्मा हृदयज्वर । अन्यच्च । तात, अस्खलितभ्रातृशतोऽहं यदा तदानवधीरितवासुदेवसामोपन्यास, संप्रति हि[11] दृष्टपितामहाचार्यानुजराजचक्रविपत्ति [13]स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधन सह पाण्डवै संधिम् । अन्यच्च । नयवेदिन्संजय,

हीयमाना किल रिपोर्नृपा संदधते परान् ।
दु शासने हतेऽहीना सानुजा पाण्डवा कथम् ॥ ६ ॥

---

१ 'तव किमत्र २ 'तदहमेव भवन्त किंचित्कथयामि', ३ 'वत्स, किं विस्तरेण इत्यत्र 'किं विचारेण इति क्वचित्पाठ ४ 'तनयस्नेहात् ५ 'बालिशत्वात्' ६ 'एतद्ब्रवीतु' 'एतद्ब्रवीति' ७ 'युष्माकमपि चाय मोह । अथ वा प्रभवति' ८ 'पुत्रनाशशोकजन्मा ९ 'अन्यच्च इति क्वचिन्नास्ति १० 'अस्खलितभ्रातृशतस्तदावधीरितवासुदेवसामोपन्यास , ११ 'हि' इति क्वचिन्नास्ति १२ 'अनुराजचक्रविपत्ति', 'अनुजराजन्यशतविपत्ति' १३ 'शरीरमात्रस्नेहात्, १४ 'हीयमाना किल रिपून्नृपा संदधते कथम् । दु शासनेन हीनोऽहं सानुज पाण्डवोऽधुना ॥ इति बहुपुस्तकाना पाठ, 'हीयमाना किल रणे नृपा संदधते परान् । दु शासने हते हीना पाण्डवा यम् ॥' इत्यपि क्वचित्पाठ

**धृतराष्ट्रः**—वत्स, एवं गतेऽपि मत्प्रार्थनया न किंचिन्न करोति युधिष्ठिरः। अन्यच्च। सर्वमेवापकृतं नानुमन्यते।

**दुर्योधनः**—कथमिव।

**धृतराष्ट्रः**—वत्स, श्रूयतां प्रतिज्ञा युधिष्ठिरस्य। नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्धारयामीति। बहुच्छलत्वात्संग्रामस्यानुजनाशमाशङ्कमानो यदैव भवते रोचते तदैवासौ सज्जः संधातुम्।

**संजयः**—एवमिदम्।

**गान्धारी**—जाद, उपपत्तिजुत्तं पडिवज्जस्स पिदुणो वअणम्। (क)

**दुर्योधनः**—तात, अम्ब, संजय,

एकेनापि विनानुजेन मरणं पार्थः प्रतिज्ञातवा-
न्भ्रातॄणां निहते शते विषहते दुर्योधनो जीवितुम्।
तं दुःशासनशोणिताशनमरिं भिन्नं गदाकोटिना
भीमं दिक्षु न विक्षिपामि कृपणः संधिं विदध्यामहम्॥ ७॥

**गान्धारी**—हा जाद दुस्सासण, हा मदङ्कदुल्ललिद, हा जुअराअ,

---

(क) जात, उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम्।

---

१. 'किं न करोति युधिष्ठिरः'. २. 'सर्वं दैवापकृतं मन्यते युधिष्ठिरः'; 'सर्वं दैवात्मानमपकृष्टं मन्यते भवद्भ्यो युधिष्ठिरः'; ३. 'कथमेवेति'. ४. 'वत्स' इति क्वचिन्नास्ति. ५. 'सधारयामीति' ६. 'यथैव भवते रोचते तथैवासौ शक्तः संधातुम्' इति बहुपुस्तकाना पाठः. ७. 'जाद' इति क्वचिन्नास्ति. ८. 'अमिकपते'. ९. 'भिन्दन्गदाकोटिभिः'. १०. 'विक्षिपत्यनुनयं तस्मिन्निधत्ते कथम्' इति पाठः. ११. 'हा जाद दुस्सासण, हा दुम्मरिसण, हा विकण्ण, हा वीरसदप्पसविणी गान्धारी दुक्खसदं प्पसूदा ण सुदसदम्' इति बहुपुस्तकानां पाठः.

अस्सुदपुव्वा क्खु कस्स वि लोए ईदिसी विपत्ती। हा वीरसदप्पसविणी हदगान्धारी दुक्खसद प्पसूदा ण उण सुदसदम्। (क)

( सर्वे रुदन्ति। )

**संजयः**—( बाष्पमुत्सृज्य। ) तात, अम्ब[1], प्रतिबोधयितु[2] महाराजमिमा भूमि युवामागतौ। तदात्मापि[3] तावत्सस्तभ्यताम्।

**धृतराष्ट्रः**—वत्स दुर्योधन[4], एव विमुखेषु भागधेयेषु त्वयि[5] चामुञ्चति सहज मानमरिषु त्वदेकशेषजीवितालम्बनेय[6] तपस्विनी गान्धारी कमवलम्बता[7] शरणमह च।

**दुर्योधनः**—श्रूयता यत्प्रतिपत्तुमिदानीं[8] प्राप्तकालम्।

कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विष
प्रणतशिरसा राज्ञा चूडासहस्रकृतार्चना।
अभिमुखमरीन्क्रुद्धान्घ्नन्तो[9] हता शतमात्मजा
वहतु सगरेणोढा तातो धुर सहितोऽम्बया॥ ८॥

विपर्यये[10] त्वस्याधिपतेरुद्धित क्षात्रधर्म[11] स्यात्।

---

(क) हा जात दु शासन, हा मदकदुर्ललित, हा युवराज, अश्रुतपूर्वा खलु कस्यापि लोक ईदृशी विपत्ति। हा वीरशतप्रसविनी हतगान्धारी दु खशत प्रसूता न पुन सुतशतम्।

---

१ 'अम्ब' इति क्वचिन्नास्ति २ 'समाश्वासयितु' ३ 'तदात्मानमपि', 'तदात्मैव', 'तदा मनैव' ४ 'दुर्योधन' इति क्वचिन्नास्ति ५ 'त्वयि चामुञ्चति मानबन्धमरिषु' इत्यपि पाठ ६ 'त्वदेकशेषजीविताशावलम्बनेय' इति जगद्धरसमादृत पाठ ७ 'किमवलम्बता' ८ 'यत्प्रतिपत्तुमिदानीं प्राप्तकालम्' इति क्वचिन्नास्ति ९ 'अभिमुखमरीन्क्रोधादघ्नन्तो हता शतमात्मजा', 'अभिमुखमरी घ्नन्त सङ्ख्ये हता शतमात्मजा' इति पाठौ १० 'विपर्यये तु समुचित क्षात्रधर्म स्यात्', ११ 'क्षात्रधर्म स्यात्' इत्यस्मादनन्तर क्वचित् 'धृतराष्ट्र —वत्स, हित विधीयते न पुन क्षात्रवृत्तिरियम्' इत्यधिक पाठ समुपलभ्यते

( नेपथ्ये महान्कलकलः । )

**गान्धारी**—( आकर्ण्य । सभयम् । ) जाद, कहिं एदं हाहाकारमिस्सं तूररसिदं सुणीअदि । (क)

**संजयः**—अम्ब, भूमिरियमेवंविधानां भीरुजनत्रासजननी महानिनादानाम् ।

**धृतराष्ट्रः**—वत्स संजय, ज्ञायतामतिभैरवः खलु विस्तारी हाहारवः । कारणेनास्य महता भवितव्यम् ।

**दुर्योधनः**—तात, प्रसीद । पराङ्मुखं खलु दैवमस्माकम् । यावदपरमपि किंचिदत्याहितं न श्रावयति तावदेवाज्ञापय मां संग्रामावतरणाय ।

**गान्धारी**—जाद, मुहुत्तअं दाव मं मन्दभाइणीं समस्सासेहि । (ख)

**धृतराष्ट्रः**—वत्स, यद्यपि भवान्समराय कृतनिश्चयस्तथापि रहःपरप्रतीघातोपायश्चिन्त्यताम् ।

**दुर्योधनः**—

प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः
किं वा तेन कृतेन तैरिव कृतं यन्न प्रकाशं रणे ।

---

( क ) जात, कुत्रैतत् हाहाकारमिश्रं तूर्यरसितं श्रूयते ।
( ख ) जात, मुहूर्तं तावन्मां मन्दभाग्यां समाश्वासय ।

---

१. 'नादः'. २. '(श्रुत्वा । सभयम् ।)' इति क्वचित्पाठः. ३. 'संजअ, हाहाआरमिस्सं'; 'संजअ; किं एदं हाहाकारमिस्सं' इति पाठौ. ४. 'समरतूररसिदं'; 'विसमं तूररसिदं'; 'विसमं रसिदं'. ५. 'संजय:—अम्ब भूमिरियमेवंविधानां भीरुजनानाम् ।' इति पाठः. ६. 'अस्य' इति क्वचिन्नास्ति. ७. 'तावदेवानुमन्यस्व'. ८. 'संग्रामं प्रति' ९. 'रहः' इति क्वचिन्नास्ति. १०. 'प्रत्यक्षं हतबान्धवस्य न परान्हन्तुं रथो मे क्षमः' इति बहुपुस्तकानां पाठः. ११. 'तैरिह'; तैरपि. १२. 'प्रकाश्यं'.

**गान्धारी**—जाद, एआई तुमम्। को दे सहाअत्तणं करिस्सदि। (क)

**दुर्योधनः**—

एको ऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः

साम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥ ९ ॥

(नेपथ्ये। कलकलान्तरम्।)

भो भो योधाः, निवेदयन्तु भवन्तः कौरवेश्वराय, इदं महत्कदनं प्रवृत्तम्। अलमप्रियश्रवणपराङ्मुखतया। यत कालानुरूपं प्रतिविधातव्यमिदानीम्। तथा हि।

त्यक्तप्राजनरश्मिरङ्कितधनुः पार्थाङ्कितैर्मार्गणै-

र्वाहैः स्यन्दनवर्त्मना परिचयादाकृष्यमाणः शनैः।

वार्तामङ्गपतेर्विलोचनजलैरावेदयन्पृच्छतां

शून्येनैव रथेन याति शिबिरं शल्यः कुरूञ्शल्यपन्॥ १० ॥

**दुर्योधनः**—(श्रुत्वा। साशङ्कम्।) आः, केनेदमविस्पष्टमशनिपात-दारुणमुद्घोषितम्। कः कोऽत्र भोः।

(प्रविश्य संभ्रान्तः।)

**सूतः**—हा, हताः स्म। (इत्यात्मानं पातयति।)

---

(क) जात, एकाकी त्वम्। कस्ते साहाय्यं करिष्यति।

---

१. 'ता जाद'. २. 'कोवि दे'. ३. 'नन्वेक.'. ४. 'सार्धं केवलमेतु दैवमधुना', 'साध्यं केवलमस्तु दैवमधुना' इति पाठान्तराणि. ५. 'जनाः'. ६. 'एतन्महत्कदनं संवृत्तम्' इति क्वचित्पाठः. ७. 'अलमिदानीमप्रियश्रवणपराङ्मुखतया। अतः कालानुरूपं प्रतिविधातव्यम्।' इति पाठः. ८. 'विधातव्यम्'. ९. 'न्युब्जप्रोज्झितरश्मिरङ्कितधनुः'; 'त्यक्तप्राजनरश्मिरङ्कितधनुः' १०. 'स्यन्दनवर्त्मनः'; 'स्यन्दनवर्त्मना'. ११. 'कुरून्'. १२. 'कम्पयन्'. १३. 'हतोऽस्मि,' १४. '(इत्यात्मानमपातयत्।)' इति बहुपुस्तकानां पाठः.

**दुर्योधनः**—अयि, कथय ।

**धृतराष्ट्रसंजयौ**—कथ्यतां कथ्यताम् ।

**सूतः**—आयुष्मन्, किमन्यत् ।

शल्येन यथा शल्येन मूर्च्छितः प्रविशता जनौघोऽयम् ।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन ॥ ११ ॥

**दुर्योधनः**—हा वयस्य कर्ण (इति मोहमुपागतः । )

**गान्धारी**—जाद, समस्सस समस्सस । (क)

**संजयः**—समाश्वसितु समाश्वसितु देवः ।

**धृतराष्ट्रः**—भोः, कष्टं कष्टम् ।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम् ।
वत्सस्य च सुहृच्छूरो राधेयः सोऽप्ययं हतः ॥ १२ ॥

वत्स, समाश्वसिहि समाश्वसिहि । ननु भो हतविधे,

अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्ययाहम् ।
अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधनेऽपि हि कृतो भवता निराशः ॥ १३ ॥

---

( क ) जात, समाश्वसिहि समाश्वसिहि ।

---

१. 'कथय कथय' इति पाठः. २. 'धृतराष्ट्रसंजयौ—कथ्यतां कथ्यताम्' इति क्वचिन्नास्ति. ३. 'आयुष्मन्, किमन्यत्' इत्यत्र 'कथयामि किं देव' इति क्वचित्पाठः. ४. 'स्वल्पेन'. ५. 'आरूढेन'. ६. ' हा वयस्य, हा कर्ण' इति क्वचित्पाठः. ७. '( इति मोहं गतः । )' इति पाठः. ८. 'समाश्वसितु समाश्वसितु महाराजः'; ९. 'वत्सस्य मे सुहृच्छूरः'; १०. 'ननु भो हतविधे भरतकुलविमुख'; 'भगवन्विधे'. ११. 'निःशेषिताखिलसुहृद्गुरुबन्धुवर्गे' इति पाठः. १२. 'विरामः'.

वत्स दुर्योधन, समाश्वसिहि समाश्वसिहि । समाश्वासय तपस्विनीं मातरं च ।

**दुर्योधनः**—(लब्धसंज्ञः ।)

अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम् ।
सततावियुक्तमकृताप्रियं प्रियं
वृषसेनवत्सल विहाय यासि माम् ॥ १४ ॥

(पुनर्मोहमुपागतः ।)

(सर्वे समाश्वासयन्ति ।)

**दुर्योधनः**—

मम प्राणाधिके तस्मिन्नङ्गानामधिपे हते ।
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात का कथा ॥ १५ ॥

अपि च ।

शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासनं तमधुना न च बन्धुवर्गम् ।
येनातिदुःश्रवमसाधु कृतं तु कर्णे
कर्तास्मि तस्य निधनं समरे कुलस्य ॥ १६ ॥

---

१ 'वत्स दुर्योधन, समाश्वासय तपस्विनीं मातरम्', 'वत्स समाश्वसिहि, समाश्वासय चात्मानम्' इति पाठौ २ 'सततावियुक्तमकृताप्रियं कथं', ३ '(इति पुनर्मोहमुपगतः ।) ४ 'आश्वासयन्ति'. ५ 'अङ्गानामीश्वरे गते', 'अङ्गानामीश्वरे हते' इति पाठौ ६. 'हतबन्धुवर्गम्' इति क्वचित्पाठः ७ 'कृतं न कर्ण कर्णस्य तस्य निधने निधनं कुलस्य' इति जगद्धरसमादृतः पाठः, 'कृतं च कर्ण कर्तास्मि तस्य निधनं समरे कुलस्य' इत्यपि क्वचित्पाठः

**गान्धारी**—जाद, सिढिलेहि दाव क्खणमेत्त वाप्पमोक्खम्। (क)

**धृतराष्ट्रः**—वत्स, क्षणमात्र परिमार्जयाश्रूणि।

**दुर्योधनः**—

मामुद्दिश्य त्यजन्प्राणान्केनचिन्न निवारित॰।
तत्कृते त्यजतो बाष्प किं मे दीनस्य वार्यते॥ १७॥

सूत, केनैतदसभवनीयमस्मत्कुलान्तकरण कर्म कृत स्यात्।

**सूतः**—आयुष्मन्, एव किल जन कथयति।

भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य।
निहत किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य॥ १८॥

**दुर्योधनः**—

कर्णाननेन्दुस्मरणात्क्षुभित शोकसागर।
वाडवेनेव शिखिना पीयते क्रोधजेन मे॥ १९॥

तात, अम्ब, प्रसीदतम्।

ज्वलन शोकजन्मा मामय दहति दु सह॰।
समानाया विपत्तौ मे वैरं सशयितो रण॰॥ २०॥

---

(क) जात, शिथिलय तावत्क्षणमात्र बाष्पमोक्षम्।

---

१. 'क्षणमेक त्यजाश्रूणि' इति क्वचित्पाठ २ 'केनापि न स वारित॰', ३. 'सूत, केनेदमसभावितमस्मत्कुलान्तकरं कर्म कृतं स्यात्', ४. 'आयुष्मन्' इति क्वचिन्नास्ति. ५ "भूम्यानिमग्नचक्रस्तु स चक्रायुधसारथे। संख्ये किल हतो बाणैरस्मत्सेनान्तकारिण" इति पुस्तकान्तरे पाठ ६. 'दुर्योधन —कष्ट भोः कष्टम्। कर्णाननेन्दुस्मरणात्' इति क्वचित्पाठ. ७ 'अम्ब, तात, प्रसीदतम्' इति क्वचित्पाठ. ८ 'शोकज्वलनजन्मा मां तापो दहति दु सह' इति क्वचित्पाठ॰ ९ 'वरं सशयितु रणे'; 'वर सशयन रणे', 'वर सशयतो रण', 'वरं सशयतो रणम्' इति पाठान्तराणि

**धृतराष्ट्रः**—(दुर्योधनं परिष्वज्य रुदन् ।)

भवति तनय लक्ष्मीः साहसेष्वीदृशेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम् ।
अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड
छलबहुलमरीणां सङ्गरं हा हतोऽस्मि ॥ २१ ॥

**गान्धारी**—जाद, तेण एव्व सुदसदकदन्तेण विओदरेण समं समरं मग्गासि । (क)

**दुर्योधनः**—तिष्ठतु तावद्वृकोदरः ।

पीतं येन हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामृतेन्दुः ।
पुत्रस्तवाम्ब तव तात नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥ २२ ॥

सूत, अलमिदानीं कालातिपातेन । सज्जं मे रथमुपाहर । अयं चेत्पाण्डवेभ्यस्तिष्ठ । गदामात्रसहाय एव समरमुखमवतरामि ।

**सूतः**—अलमन्यथा सम्भावितेन । अयमहमागत एव । (इति निष्क्रान्तः ।)

---

(क) जात, तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गसि ।

**धृतराष्ट्रः**—वत्स दुर्योधन, यदि[1] स्थिर एवास्मान्दग्धुमयं ते व्यवसायस्तत्संनिहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम् ।

**दुर्योधनः**—नन्वभिषिक्त एव[2] ।

**गान्धारी**—जाद[3], कदरो उण सो जंस्सि[4] आसं ओलम्बिस्सम् । (क)

**धृतराष्ट्रः**—किं[5] वा शल्य उत वाश्वत्थामा ।

**संजयः**[6]—हा कष्टम् ।

गते[7] भीष्मे हते द्रोणे कर्णे च विनिपातिते ।
आशा बलवती राजञ्शल्यो जेष्यति पाण्डवान् ॥ २३ ॥

**दुर्योधनः**—किं[8] वा शल्येनोत वाश्वत्थाम्ना ।

कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।
अनिवारितसंपातैरयमात्माश्रुवारिभिः[9] ॥ २४ ॥

(नेपथ्ये कलकलं कृत्वा ।)

भो भोः कौरवबलप्रधानयोधाः, अलमस्मानवलोक्य भयादितस्ततो गन्तुम्[10] । कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति ।

( सर्वे ससंभ्रममाकर्णयन्ति । )

( प्रविश्य सम्भ्रान्तः । )

---

(क) जात, कतरः पुनः स यस्मिन्नाशामवलम्बिष्ये ।

---

१. 'यदि स्थिर एवायं निश्चयस्तदा संनिहितेषु'; २. 'एवेति'. ३. 'जाद' इति क्वचिन्नास्ति. ४. 'जस्सिं आसा अवलम्बीअदु'; 'जहिं एदं इदासं ओलम्बिस्सम्' इति पाठौ. ५. 'किं शल्योऽथवाश्वत्थामा वा' इति क्वचित् पाठः. ६. 'संजयः—हा कष्टम्' इत्यस्मादारभ्य 'शल्यो जेष्यति पाण्डवान्' इत्यन्तं पुस्तकान्तरे नास्ति. ७. 'हते'. ८. 'किं वा शल्येनोत वाश्वत्थाम्ना' इति पाठः क्वचिन्नास्ति. ९. 'अस्रवारिभिः'. १०. 'गमनेन' इति क्वचित्पाठः.

सूतः—आयुष्मन्,

प्रासावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।

सर्वे—कथ्य कथ्य ।

सूतः—

स[1] कर्णारिः स च क्रूरो वृकवकर्मा[2] वृकोदरः ॥ २५ ॥

गान्धारी—(सभयम् ।) जाद, किं ऐत्थ[3] पडिवज्जिदव्वं । (क)

दुर्योधनः—नैनु[4] सन्निहितैवेयं गदा ।

गान्धारी—हाँ[5] हदह्मि मन्दभाइणी । (ख)

दुर्योधनः—अम्ब[6], अलमिदानीं कार्पण्येन । संजय[7], रथमारोप्य[8] पितरौ शिबिरं प्रतिष्ठस्व । समागतोऽस्माकं शोकापनोदी जनः[9] ।

धृतराष्ट्रः—वत्स, क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे[10] ।

दुर्योधनः—तात, किमनेनोपलम्भेन[11] ।

(ततः प्रविशतो भीमार्जुनौ ।)

---

( क ) जात, किमत्र प्रतिपत्तव्यम् ।

( ख ) हा हतास्मि मन्दभागिनी ।

---

१. 'कर्णद्यारिः' २ 'भीमकर्मा' ३ 'एत्थ सुपद्द पडिवज्जिदव्वम् एत्थ कादव्वम्' ४. 'अम्ब, ननु' ५ 'हा हदह्मि अह मन्दभाइणी', 'अम्ब' इति क्वचिन्नास्ति ७ 'संजय, राजय' इति पटुपुस्तकानां पाठः. 'प्रस्थापय', 'प्रवेशय', ९. 'प्रसोऽस्मच्छोकापनोदप्रणयी जनः' इति क पुस्तकानां पाठः १० 'उपलभामहे' ११ 'उपलम्भेन । तद्गम्यताम् ।'

**भीमः**—भो भोः सुयोधनानुजीविनः, किमिति सम्भ्रमादयथायथ चरन्ति भवन्तः । कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः । अलमावयोः शङ्कया ।

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्र
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥२६॥

**धृतराष्ट्रः**—संजय, दारुणः खल्वपक्षेपः पापस्य ।

**संजयः**—तात, कर्मणा कृतानिःशेषविप्रियाः सम्प्रति वाचा व्यवस्यन्ति ।

**दुर्योधनः**—सूत, कथय गत्वोभयोरयं तिष्ठतीति ।

**सूतः**—यथाज्ञापयति देवः । (तावुपसृत्य ।) ननु भो वृकोदरार्जुनौ, एष महाराजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

**अर्जुनः**—आर्य, प्रसीद । न युक्त पुत्रशोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम् । तद्गच्छावः ।

---

१. 'सुयोधनानुजीविनो योधाः' इति क्वचित्पाठ. २. 'किमिति संभ्रमात्सच- रन्ति भवन्त.'; ३. 'कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः' इति केषुचित्पुस्तकेषु नास्ति. ४. 'अलमावयो. शंकया' इति क्वचिन्नास्ति. ५. 'जतुमयसदनोद्दीपनः'. ६. 'अतिमानी'. ७. 'व्यपनयनमरुत्' इति बहुभिः प्राचीनैः समादृतः पाठः. ८. 'न रुषा' इत्यत्र 'परुषाः' इति क्वचित्पाठ.. "पुरुषा." इति दशरूपके. ९. 'कृतानि.शेषेऽपि सम्प्रति विप्रियं वाचा व्यव- स्यन्ति' १०. 'मूढे'. ११. 'गत्वानयोरयं महाराजस्तिष्ठतीति' इति कचित्पाठः. १२. 'यथाज्ञापयसि', १३. '( इति तावुपसृत्य । )'. १४. 'ननु' इति क्वचिन्नास्ति. १५. 'तिष्ठतीति'. १६. 'पुत्रशोकपीडितौ पितरौ पुनरस्मद्- र्शनेनोद्वेजयितुम्';

**भीम**—मूढ, अनुल्लंघनीयः सदाचारः । न युक्तमनभिवाद्य गुरूनॅगन्तुम् । (उपसृत्य ।) संजय, पित्रोर्नमस्कृति श्रावय । अथवा तिष्ठ । स्वयं विश्राव्य नामकर्मणी वन्दनीया गुरवः ।

**अर्जुनः**—(उपगम्य ।) तात, अम्ब,

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥ २७ ॥

**भीमः**—

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भंक्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥ २८ ॥

**धृतराष्ट्रः**—दुरात्मनन्वृकोदर; खल्विदं भवतैव केवलं सपत्नानामपकृतम् । यावत्क्षत्र तावत्समरविजयिनो जिता हताश्च वीराः । तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि ।

**भीमः**—तात, अलं मन्युना ।

---

१. 'मूढ' इत्यत्र 'पण्डितंमन्य'; 'अयि पंडित' इति पाठौ. २. 'अलंघनीय'. ३. 'समुदाचारः'. ४. 'स्वगुरुं'. ५. 'अथवा तिष्ठ । स्वयमेव श्रावयावः ।' (इति रथादवतरतः ।) भीमः—'विश्राव्य स्वकर्म न म च वन्दनीया गुरवः' इति बहुपुस्तकानां पाठः. ६ '(उपसृत्य ।)'. ७. 'फाल्गुनः पाण्डवोऽयम्' ८. 'निहताशेषकौरव्यः'. ८. 'शिरसा नतः'. ९. 'दुरात्मन्वृकोदर, मा तावद्विकत्थयात्मानम्'. 'न खल्विदं' इति केचित्. १०. 'क्षात्रं'. ११. 'अलमलं मन्युना'; 'अलमिदानीं मन्युना'.

कृष्णा केशेषु कृष्टा तव सदसि पुरः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृतशलभकुलावज्ञयानेन दग्धाः।
एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पा-
त्पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव॥ २१॥

**दुर्योधनः**—अरे रे मरुत्तनय, किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे। अपि च।

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी।
अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव दर्पः॥ ३०॥

(भीमः क्रोधं नाटयति।)

**अर्जुनः**—आर्य, प्रसीद। किमत्र क्रोधेन।

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा॥ ३१॥

**भीमः**—अरे रे भरतकुलकलङ्क,

अत्रैव किं न विसृजेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन्।

---

१. 'कृष्टा केशेषु कृष्णा' २. 'वधूः'. ३. 'कृतशलभकुलावज्ञया'. ४. ...नेन'; 'येन'. ५. 'तात, त्वां श्रावयेऽहं' इति क्वचित्पाठः ६. 'भवत्वम्'... ...'पुरः'. ८. 'अतिनिन्दितव्यमपि' 'निन्दितमपि'. ९. 'क्ष्मापतीनां'. १०. ...व किमपकृतं'; 'कथमनपकृतं' इति पाठौ. ११. 'वीर्यातिसार–'; 'वीर्याति–...र–'. १२. 'अर्जुनः—(निवारयन्।) आर्य, प्रसीद प्रसीद। किमत्र क्रोधेन।'; ...र्जुनः—आर्य, किमत्र क्रोधेन' इति पाठौ. १३. करोत्येव'. १४. 'कथा'. ...५. 'अत्रैव किं न विशसेयम्'; 'अद्यैव किं न विसृजेयम्.'

विघ्नं गुरुर्न कुरुते यदि मत्कराग्र
निर्भिद्यमानरणितास्थनि ते शरीरे ॥ ३२ ॥

अन्यच्च मूढ,

शोके स्त्रीवन्नयनसलिलं यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपते कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥ ३३ ॥

**दुर्योधनः**—दुरात्मन्, भरतकुलापसद, पाण्डवपशो, नाहं भवानिव विकत्थनाप्रगल्भः । किंतु

द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम् ॥ ३४ ॥

**भीमः**—(विहस्य ।) यद्येवं नाश्रद्धेयो भवान् । तथापि प्रत्यासन्नमेव कथयामि ।

पीनाभ्यां मद्भुजाभ्यां भ्रमितगुरुगदाघातसंचूर्णितोरो
रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वः प्रभाते ।

१ 'गुरुः न कुरुते' २ 'मद्गदाग्र–', 'मद्गदाग्रै' ३ 'अस्थिनि' ४ 'शोके स्त्रीवन्नयनसलिलैः', 'शोके स्त्रीवन्नयनसलिलं' इति पाठौ ५ 'विदलने' ६ 'कारणं' ७ 'भरतकुलाधम, द्यूतदास पाण्डवपशो', ८ 'पाण्डवास्त्वां रणाजिरे' इति पाठः ९ 'असृग्वेणिकाभीमभूषणम्', 'अस्थिवेणिकामङ्गभीषणम्' १० 'श्रेणिका' इति जगद्धरसंमतः पाठः, 'कणिका' इत्यपि पाठो जगद्धरेण कथितः ११ 'यद्येवं न श्रद्धेयो भवांस्तथापि प्रत्यासन्नमेव कथयामि', 'यदि न श्रद्धत्ते तदा प्रत्यासन्नमेव कथयामि', १२ 'भ्रमितगुरुगदाघातसंचूर्णितोरो' इति पाठः

तन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेनानखाग्रं
स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥ ३५ ॥

( नेपथ्ये । )

भो भो भीमसेनार्जुनौ, एष खलु निहताशेषारातिचक्र आक्रान्तपरशुरामाभिरामयशाः प्रतापतापितदिङ्मण्डलस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति ।

**उभौ**—किमाज्ञापयत्यार्यः ।

( पुनर्नेपथ्ये । )

कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-
नश्रूर्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।
मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥ ३६ ॥

**उभौ**—यदाज्ञापयत्यार्यः । ( इति निष्क्रान्तौ । )

( नेपथ्ये । )

अरे रे गाण्डीवाकर्षणबाहुशालिन्, अर्जुन अर्जुन, केदानीं गम्यते ।
कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवतां शूरशून्ये रणेऽस्मिन् ।

---

१. 'तन्मुखभ्रातृचक्रोद्गमन'; २. 'आनखामात्'. ३. 'स्त्यानेनानेन [illegible] वयमनुभविता भूषणं भीमसेन.' इति पाठो. ४. 'अयं'. ५. उद्धृतारातिचक्रः'. ६. 'निक्रमाक्रान्त–'. ७. 'प्रतापतापितदिङ्मण्डलः स्थापितस्वजनः श्रीमानजातशत्रुः'; 'प्रतापतापितदिङ्मण्डलः श्रीमानजातशत्रुः'. ८. 'कुर्वन्त्वनाहतानां'. ९. नृणा'. १०. 'अश्रून्मिश्रं'. १२. 'मृग्यन्ताम्'. 'अर्सा'. १३. 'सज्जयन्तां'. १४. 'आः'. १५. 'क्वेदमधुना गम्यते' इति पाठः. १६; 'विजयधनुः' १७. 'भवतः'.

स्पर्शे स्मृत्वोत्तमाङ्गे पितुरनवजितं यस्तहेतेरुपेतं
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥ २६ ॥

**धृतराष्ट्र**—( आकर्ण्य सहर्षम् । ) वत्स दुर्योधन, द्रोणवधपरिभवोद्दीपितक्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्चायमश्वत्थामा प्राप्तः । तत्प्रत्युपगमनेन तावदयं संभाव्यतां वीरः ।

**गान्धारी**—जाद, पच्चुग्गच्छ एदं महाभाअम् । (क)

**दुर्योधनः**—तात, अम्ब, किमनेनाङ्गराजवधाशंसिना वृथायौवनशस्त्रबलभरेण ।

**धृतराष्ट्रः**—वत्स, न खल्वस्मिन्काले पराक्रमवतामेवंविधानां वाङ्मात्रेणापि विरागमुत्पादयितुमर्हसि ।

( प्रविश्य । )

**अश्वत्थामा**—विजयतां कौरवाधिपतिः ।

**दुर्योधनः**—( उत्थाय । ) गुरुपुत्र, इत आस्यताम् । ( इत्युपवेशयति । )

**अश्वत्थामा**—राजन्दुर्योधन,

कर्णेन कर्णसुभगं बहु यत्तदुक्त्वा
यत्संगरे विहितं विदितं त्वया तत् ।

---

(क) जात, प्रत्युद्गच्छ एतं महाभागम् ।

---

१ 'अनवहित-यस्तहेते', 'अनवहित यत्कहेते' २ 'परिभवोद्दीप्तक्रोधपावक,' ३ 'अमरोपम' इति क्वचिन्नास्ति ४ 'अथ महात्माश्वत्थामा प्राप्तः। तत्प्रत्युपगमनेन तावदयं संभाव्यतां महात्मा' 'अथ महात्मा प्रत्युपगमनेनापि संभाव्यताम्' इति पाठौ ५ 'वृथायौव ... भरेण', 'वृथायोधेन समालोकितेन' ६ 'वचनमात्रेणैव' ७ 'विरागमुत्पादयितुमर्हसि' ८ 'आगम्यताम्' ९ 'अश्व०—( सासूयम् । ) राजन्कौरवाधिपते' इति पाठः १० 'कर्णसुखदं बहु यत्तदुक्त्वा'

द्रौणिस्त्वयि ज्यधनुरापतितोऽप्यमित्र-
मेषोऽधुना त्यज नृप प्रतिकारचिन्ताम् ॥ ३८ ॥

**दुर्योधनः**—( साभ्यसूयम् । ) आचार्यपुत्र,

अवसानेऽङ्गराजस्य योद्धव्यं भवता किल ।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः कः सुयोधनः ॥ ३९ ॥

**अश्वत्थामा**—( स्वगतम् । ) कथमद्यापि स एव कर्णपक्षपातः । अस्मासु च परिभवः । ( प्रकाशम् । ) राजन्कौरवेश्वर, एवं भवतु । ( इति निष्क्रान्तः । )

**धृतराष्ट्रः**—वत्स, क एष ते व्यामोहो यदस्मिन्नपि काले एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि ।

**दुर्योधनः**—किमस्याप्रियमनृतं च मयोक्तम् । किं वा नेदं क्रोधस्थानम् । पश्य ।

अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम् ।
परिवदति समक्षं मित्रमङ्गाधिराजं
मम खलु कथयास्मिन्को विशेषोऽर्जुने वा ॥ ४० ॥

**धृतराष्ट्रः**—वत्स, तथापि कोऽत्र दोषः । अवसानमिदानीं भरतकुलस्य । सञ्जय, किमिदानीं करोमि मन्दभाग्यः । ( विचिन्त्य । ) भवत्वेवं तावत् । सञ्जय, मद्वचनाद्ब्रूहि भारद्वाजमश्वत्थामानम् ।

---

१. 'अप्रतिकारदुःखम्', 'प्रतिकारदुःखम्'. २. '(साक्षम् ।)'. ३. 'अश्व०—कथमद्यापि स एव कर्णपक्षपातः । अस्मासु च परिभवः ।' ४ 'धृत०—वत्स, क एष ते व्यामोहः । अस्मिन्काले एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि', ५. 'अप्रियमनृतं मयोक्तम्'. ६. 'नाय क्रोधस्थानम्'. ७. 'भाग्यदोषैः'. ८. 'परिभवति'. ९. 'अथवा वत्स'. १०. 'इदं'. ११. 'वत्स, सञ्जय'.

स्मरति न भवान्पीतं स्तन्यं विभज्य सहामुना
मम च मृदितं क्षौमं बाल्ये त्वदङ्गविवर्तनैः ।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च तत्-
द्विकृतवचने मास्मिन्क्रोधश्चिरं क्रियतां त्वया ॥ ४१ ॥

**संजयः**—यदाज्ञापयति तातः । (इत्युत्तिष्ठति ।)

**धृतराष्ट्रः**—अपि चेदमन्यत्त्वया वक्तव्यम् ।

यन्मोचितस्तव पिता नियतेन शत्रु
र्यत्तादृशं परिभवं स तथाविधेऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषं च
दुर्योधनोक्तमपहाय विधास्यसीति ॥ ४२ ॥

**संजयः**—यदाज्ञापयति तातः । (इति निष्क्रान्तः ।)

**दुर्योधनः**—सूत, साङ्ग्रामिकं मे रथमुपकल्पय ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । (इति निष्क्रान्तः ।)

**धृतराष्ट्रः**—गान्धारि, इतो वयं मद्राधिपतेः शल्यस्य शिबिरमेव गच्छामः । वत्स, त्वमप्येवं कुरु ।

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

## इति पञ्चमोऽङ्कः ।

---

१ 'विगाय' २ 'मलिन. ३ जात' ४ 'यद्वचनविकृतिस्तस्य क्रोधो मुधा क्रियतां त्वया', 'यद्वचनविकृतिस्तस्य क्रोधो मुधा क्रियते त्वया' ५ 'तथाविधो' ६ 'भवनीय' ७ 'यथाज्ञापयति तात '.

# षष्ठोऽङ्कः ।

( ततः प्रविशत्यासनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च । )

**युधिष्ठिरः**—( विचिन्त्य निःश्वस्य च । )

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ १ ॥

**द्रौपदी**—( सबाष्पम् । ) महाराअ, पञ्चालिए त्ति किं ण भणिदम् । (क)

**युधिष्ठिरः**—कृष्णे, ननु मया । ( पुरुषमवलोक्य । ) बुधक,

**पुरुषः**—देव, आज्ञापय ।

**युधिष्ठिरः**—उच्यतां सहदेवः—'क्रुद्धस्य वृकोदरस्यापर्युषिता प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवराजस्य पदवीमन्वेष्टुमतिनिपुणमतयस्तेषु तेषु स्थानेषु परमार्थाभिज्ञाश्चराः सुसचिवाश्च भक्तिमन्तः पटुपटहरव-

(क) महाराज पाञ्चाल्येति किं न भणितम् ।

१. केषुचित्पुस्तकेषु 'पुरुष' शब्दस्थाने 'कंचुकि' शब्दो वर्तते. २. 'युधिष्ठिर ( सचिन्तं निःश्वस्य । ) कष्टं भोः कष्टम् । तीर्णे भीष्ममहार्णवे'; 'युधिष्ठिरः—( विचिन्त्य निःश्वस्य च । ) तीर्णे भीष्ममहार्णवे' इति पाठान्तराणि. ३. 'शल्येऽपि याते दिवम्' इति दशरूपके'. ४. 'अल्पावशिष्टे'. ५. 'वाचा समारोपिताः' इत्यस्मादनन्तर केचित् '(पुरुषमवलोक्य ।) भद्र बुधक, उच्यतां सहदेवो यथा' इति पठन्ति. ६. 'भणामि'. ७. 'देव' इति क्वचिन्नास्ति. ८. 'दारुणा प्रतिज्ञामुपलभ्य'; 'अपर्युषितदारुणा प्रतिज्ञामुपलभ्य'; इति पाठान्तरे. ९. 'कौरवनाथस्य'. १०. 'इङ्गितुं'. ११. 'स्थानान्तरेषु'. १२. 'परमार्थाभिज्ञाश्चरा मन्त्रिगणश्च'; 'यथार्थाभिज्ञाश्चराः सुसचिवाश्च'; 'यथार्थाभिज्ञाश्चाराः सञ्चरन्तु । सुसचिवाः' इति पाठान्तराणि. १३. 'पटुपटहघोषणाः' इति जगद्धरसमादृतः पाठः.

व्यस्तघोषणा सुयोधनसंचारवेदिन प्रतिश्रुतधनपूजाप्रत्युपक्रियाश्चरन्तु समन्तात्समन्तपञ्चकम् । अपि च ।

पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दाशा
कुञ्जेषु क्षुण्णवीरुन्निचयपरिचया बल्लवा सचरन्तु ।
नागव्याघ्राटवीषु श्वपचपुरविदो ये च रन्ध्रेष्वभिज्ञा
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं तेषु चाराश्चरन्तु ॥ २ ॥

पुरुषः—यथाज्ञापयति देव ।

युधिष्ठिरः—तिष्ठ । एव च वक्तव्य सहदेव ।

ज्ञेया रह शङ्कितमालपन्त
सुप्ता रुगार्ता मदिराविधेया ।
त्रासो मृगाणा वयसा विरावो
नृपाङ्कपादप्रतिमाश्च शैत्रो ॥ ३ ॥

पुरुषः—यदाज्ञापयति देव । (इति निष्क्रम्य पुन प्रविश्य सहर्षम् ।

देव पाञ्चालक प्राप्त ।

---

१ 'सुयोधनपदसचारवेदिन' इति बहुपुस्तकानां पाठ २ 'समन्तात्' क्वचिन्नास्ति ३ 'पङ्के वा सैकते वाप्सु च परपदवीवेदिन' इति क्वचित्पाठ 'दाशा' ५ 'कुञ्जेष्वाक्रान्तवीरुन्निचयपरिचया', 'कुञ्जेषु क्षुण्णवीरुन्निचयपरिचया' ६ 'नागव्याघ्राटवीषु स्वपरपदविदो ब्रह्मदेशे च सस्था', 'व्याघ्राटवीषु स्वपदपरविदो ये च रन्ध्रेष्वभिज्ञा' इति पाठौ ७ 'ये सिद्धव्यञ्जना वा प्रतिमुनिनिलय ते च चाराश्चरन्तु' इति पाठ ८ 'यदाज्ञापयति देव' 'युधिष्ठिर —तिष्ठ । इदमपरं वक्तव्य सहदेव', १० 'रुगार्ताश्च वने विचेय' इति बहव ११ यत्र १२ 'कचुकी—यथाज्ञापयति देव । (इति निष्क्रम्य पुन प्रविश्य सहर्षम् ।) देव, पाञ्चालक प्राप्त । युधि०—त्वरित प्रवेशय कचुकी—( निष्क्रम्य पाञ्चालकेन सह प्रविश्य । ) एष देव उपसर्पतु । पाञ्च जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।', 'पुरुष —यथाज्ञापयसि । ( इति निष्क्रान्त । ) पाञ्चा०—( प्रविश्य । ) प्रियमावेदय महाराजाय देव्यै च' इति पाठौ

**युधिष्ठिरः**—त्वरितं प्रवेशय ।

**पुरुषः**—(निष्क्रम्य पाञ्चालकेन सह प्रविश्य ।) एष देवः । उपसर्पतु पाञ्चालकः ।

**पाञ्चालकः**—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।

**युधिष्ठिरः**—पाञ्चालक, कच्चिदासादिता तस्य दुरात्मनः कौरवा[2]-धमस्य पदवी ।

**पाञ्चालकः**—न[3] केवलं पदवी । स एव[4] दुरात्मा देवी[5]केशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।

[6]**युधिष्ठिरः**—साधु । भद्र, प्रियमावेदितम् । अथ दर्शनगोचरं गतः ।

**पाञ्चालकः**—देव, समरगोचरं पृच्छ ।

**द्रौपदी**[7]—(सभयम् ।) कहं समरगोअरो वट्टइ मे णाहो । (क)

**युधिष्ठिरः**—(साशङ्कम् ।) सत्यं समरगोचरो मे वत्सः ।

**पाञ्चालकः**—सत्यम् । किमन्यथा वक्ष्यते महाराजाय ।

---

(क) कथं समरगोचरो वर्तते मे नाथः ।

---

१. 'भद्र पाञ्चालक'. २. कौरवापसदस्य. ३. 'देव, न केवलं पदवी' इति बहवः ४. 'अपि'. ५. 'देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुः' ६. 'युधिष्ठिरः—(सहर्षं पाञ्चालकं परिष्वज्य ।) साधु भद्र, साधु । भवता प्रियमावेदितम् । अपि दर्शनगोचरं गतः'; 'युधिष्ठिरः—(सहर्षं परिष्वज्य पारितोषिकं भूषणं प्रयच्छति ।) साधु भद्र, साधु । भवता प्रियमावेदितम् । अपि दर्शनगोचरं गतः'; इति पाठौ. ७. 'द्रौपदी—(साशङ्कम् ।) कहं समरगोअरे वट्टइ मे णाहो' इति पाठः.

**युधिष्ठिरः—**

त्रस्त विनापि विषयाद्गुरुविक्रमस्य
चेतो विवेकपरिमन्थरता प्रयाति ।
जानामि चोद्यतगदस्य वृकोदरस्य
सार रणेषु भुजयो परिशङ्कितश्च ॥ ४ ॥

( द्रौपदीमवलोक्य । ) अयि सुक्षत्रिये,

गुरूणा बन्धूना क्षितिपतिसहस्रस्य च पुर
पुराभूदस्माक नृपसदसि योऽय परिभव ।
प्रिये प्रायस्तस्य द्वितयमपि पार गमयति
क्षय प्राणाना न कुरुपतिपशोर्वाद्य निधनम् ॥ ५ ॥

अथवा कृत सदेहेन ।

नून तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणक्षम ॥ ६ ॥

पाञ्चालक, कथय कथय कथमुपलब्ध स दुरात्मा कस्मिन्नुद्देशे कि वाधुना प्रवृत्तमिति ।

**द्रौपदी—**भद्द, कहेहि कहेहि । (क)

---

(क) भद्र, कथय कथय ।

---

१ 'युधिष्ठिर —(साशङ्कम् ।) भ्रातुर्विनापि विषयाद्गुरुविक्रमस्य' इति पाठ • ३ 'उद्धतगदस्य' २ 'विजये' ४ 'परिशङ्कितश्च' ५ '( द्रौपदीमवलोक्य मुखादस्या बाष्पमपनयति । )', '(द्रौपदीमवलोक्य मुखादस्याबाष्प नयति ।)' इति पाठौ ६ प्रेय ' ७ 'गमयितु , 'गमयतु'. ८. 'वा' ९ 'तस्य निधनम्', 'वापि समरे १० अथवानास्पद एव सदेह ' इति पाठ ११ 'आकर्षणे क्षम ', 'आकर्षणे प्रभु ', १२ पाञ्चालक, कथय कथय कथमुपलब्ध स दुरात्मा कस्मिन्नु-द्देशे, किमधुना प्रवृत्तमिति', 'पाञ्चालक, कथमुपलब्ध कस्मिन्नुद्देशे किमधुना ---- कथय' इति पाठौ.

**पाञ्चालकः**—शृणोतु देवो देवी च । अस्तीह देवेन हते मद्राधिपतौ शल्ये, गान्धारराजकुलशलभे सहदेवशस्त्रानलं प्रविष्टे, सेनापतिनिधननिराक्रन्दविरलयोधोज्झितासु समरभूमिषु, रिपुबलपराजयोद्धतवल्गितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु, प्रनष्टेषु कृपकृतवर्माश्वत्थामसु, तथा दारुणामपर्युषितां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः ।

**युधिष्ठिरः**—ततस्ततः ।

**द्रौपदी**—अयि, परदो कहेहि । (क)

**पाञ्चालकः**—अवधत्तां देवो देवी च । ततश्च भगवता वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ तमनासादितवन्तौ च । अनन्तरं दैवमनुशोचति मादृशे भृत्यवर्गे, दीर्घमुष्णं च निःश्वसति कुमारे बीभत्सौ, जलधरसमयनिशासंचारितखद्योतप्रकरपिङ्गलैः कटाक्षैरादीपयति गदां वृकोदरे यत्किंचनकारिता-

(क) अयि, परतः कथय ।

१. 'मद्राधिपे'; 'मद्रपतौ'. २. 'गान्धारराजशलभकुले सहदेवानलं प्रविष्टे'; सहदेवशस्त्रानलमनुप्रविष्टे गान्धारराजशलभे'; इति पाठान्तराणि. ३. 'निरानन्द–'. 'नराक्रन्द–'. ४. 'रिपुपराजयोद्धतवेल्लितविचित्र–'; 'रिपुपराजयोद्धतचलितविचित्र–'. ५. 'दारुणां प्रतिज्ञामुपलभ्य'; 'दारुणामपर्युषितां च प्रतिज्ञामुपलभ्य' इति पाठौ. ६. 'वृकोदरस्य'. ७. 'द्रौपदी—'अग्गदो कहेहि' इति बहुपुस्तकानां पाठः. ८. 'वासुदेवेनाधिष्ठितावेकरथारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ न चासादितवन्तौ तम्'. ९. 'अनन्तरं च.' १०. 'निःश्वसति कुमारबीभत्सौ'; 'निःश्वसति बन्धुवर्गे'. ११. 'तडित्प्रकरपिङ्गलैः'. १२. 'नाथे वृकोदरे यत्किंचनकारितां च विक्षिपति भगवति नारायणे' इति पाठः

मधिक्षिपति विधेर्भगवति नारायणे कश्चित्सविदित कुमारस्य भारते रुज्झितमासभार प्रत्यग्रविशसितमृगलोहितचरणनिवसनस्त्वरमाणोऽन्तिकमुपेत्य पुरुषः श्वासप्रस्तार्धश्रुतवर्णानुमेयपदया वाचा कथितवान् 'अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती समवतीर्णप्रतिबिम्बे। तयोरेका स्थलमुत्तीर्णा न द्वितीया। परत्र कुमार प्रमाणम्' इति। तत स सम्भ्रम प्रस्थित सर्वे वय तेमेन पुरस्कृत्य गत्वा च सरस्तीर परिज्ञायमानसुयोधनपदलाञ्छना पदवीमासद्य भगवता वासुदेवेनोक्तम्—भो वीर वृकोदर, जानासि किल सुयोधन सलिलस्तम्भनीं विद्याम्। तन्नून तेन त्वद्भयात्सरसीमेनामधिशयितेन भवितव्यम्।' एतच्च वचनमुपश्रुत्य रामानुजस्य,सकलदिङ्निकुञ्जपूरितातिरिक्तमुद्भ्रान्तसलिलचरशकुन्तकुलसन्त्रासोद्धतनक्रग्राहमालोड्य सर सलिल, भैरव च गर्जित्वा कुमारवृकोदरेणाभिहितम्—अरे रे वृथाप्रख्यापितालीकपौरुषाभिमानिन्, पाञ्चालराजतनया केशाम्बराकर्षणमहापातकिन्,

---

१ 'मृगालोहितचरणनिवसन', 'मृगलोहितचरणनिवसनः'. २ 'अस्मदन्तिक' ३ 'पदपश्वासप्रस्ताधश्रुतवर्णानुमेयपदया वाचा कथितवान्' ४ 'देव कुमार, अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती जलमवतीर्णे। तयोरेका स्थलमुत्तीर्णा न द्वितीया लक्षिता'. ५ 'तमेव पुरुष पुरस्कृत्य सरसस्तीरं परिज्ञाय सुयोधनपदलाञ्छितां पदवीं कथित भगवता वासुदेवेन। वृकोदर जानाति किल सुयोधन सलिलस्तम्भनीं विद्याम्। नून तेन त्वद्भयात्' ६ 'रामानुजस्य सकलनिकुञ्जपूरिताशातिरिक्तमुद्भ्रान्तसलिलचरशतसकुल त्रासोद्धृत्तनक्रग्राहमालोड्य सर सलिल भैरव च गर्जित्वा'. ७ 'अरे रे' इत्यस्मादारभ्य 'महापातकिन्' इत्यन्त क्वचिन्नास्ति. ८ 'पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्, धार्तराष्ट्रापसद', 'पाञ्चालराजतनयाकेशाम्बराकर्षण, महापातकिन् धार्तराष्ट्रापसद', 'द्रुपदसुताकेशाम्बराकर्षणमहापातकिन्' इतिपाठान्तराणि

जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ ७ ॥

अपि च । भो मानान्ध,

पाञ्चाल्या मन्युवह्निः स्फुटमुपशमितप्राय एव प्रसह्य
व्यामुक्तैः केशपाशैर्हतपतिषु मया कौरवान्तःपुरेषु ।
भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं भीमसेने विहितमसमये यत्त्वयास्तोऽभिमानः ॥ ८ ॥

**द्रौपदी**—णाह, अवणीदो मे मण्णु जइ पुणो वि सुलहं दंसणं भविस्सदि । (क)

**युधिष्ठिरः**—कृष्णे, नामङ्गल्यानि व्याहर्तुमर्हस्यस्मिन्काले । भद्र, ततस्ततः ।

**पाञ्चालकः**—ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतं गदापरिघपाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनीवनमपविद्धमूर्च्छितग्राहमुद्भ्रान्तमत्स्यशकुन्तमतिभैरवारवभ्रमितवारिसंचयमायतमपि तत्सरः समन्तादालोडितम् ।

---

(क) नाथ, अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति ।

---

१. 'अमले' इति बहवः. २. 'मधुक्षीबं रिपुं मन्यसे' इति पाठः. ३. 'त्रासान्मे' इति दर्पणकृतः पाठः. ४. 'मानान्ध, कौरवाधम' इति बहुपुस्तकानां पाठौ. ५. 'क्रोधवह्निः'. ६. 'एष प्रसह्य'. ७. 'व्यासक्तैः' 'प्रोन्मुक्तैः' इति पाठौ. ८. 'अस्मिन्काले' इति क्वचिन्नास्ति. ९. 'देव, ततश्चैव भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतं भ्रमितभीषणगदापरिघकपाणिना सहसैवोल्लङ्घिततीरमुत्सन्नपुलिननलिनीवनमाविद्धमूर्च्छितग्राहमुद्भ्रान्तमत्स्यशकुन्तमतिभैरवारववेगभ्रमितवारिसंचयमायतमपि तत्सरः समन्तादालोडितम् ।';

**युधिष्ठिरः**—भद्र, तथापि किं नोत्थितः ।

**पाञ्चालकः**—देव[2],

त्यक्त्वोत्थितः सरभस सरसः[3]समूल-
मुत्क्रान्तकोपदहनोग्रविषस्फुलिङ्गः ।
[4]आयस्तभीमभुजमन्दरवेल्लनाभिः
[5]क्षीरोदधेः सुमथनादिव कालकूटः ॥ ९ ॥

**युधिष्ठिरः**—साधु [6]सुक्षत्रिय, साधु ।

**द्रौपदी**—पडिवण्णो [7]समरो ण वा । (क)

**पाञ्चालकः**—उत्थाय च [8]तस्मात्सलिलाशयात्करयुगलोत्तम्भिततोरणीकृतभीम[9]गदः कथयति स्म—'[10]अरे रे मारुते, किं भयेन प्रलीनं दुर्योधनं मन्यते भवान् । मूढ, [11]अनिहतपाण्डुपुत्रः प्रकाशं लज्जमानो वि[12]श्रमितुमध्यवसितवानस्मि पातालम् ।' एवं चोक्ते[13] वासुदेवकिरीटिभ्या द्वाव-प्यन्तःसलिलं निषि[14]द्धसमरारम्भौ स्थलमुत्तारितौ । आसीनश्च कौरवराजः

---

(क) प्रतिपन्नः समरो न वा ।

---

१. 'युधि०—भद्र, तथापि नोत्थितः', 'युधि०—तथापि नोत्थितः' इति पाठौ. २. 'देव, कथं नोत्थित.' इति बहवः ३. 'सलिलं सलीलमुत्क्रान्तकोपदहनोग्रविषस्फुलिङ्गः'; 'सरसः समूलमुद्धूतकोपदहनो विषविस्फुलिङ्गः'; सलिलं सलीलमुद्धूतकोपदहनोग्रविषस्फुलिङ्गः । ४. 'आयत्त—'. ५. 'क्षीराम्बुधेः सुमथितादिव'; ६. 'महाक्षत्रिय'. ७. 'समरे'; 'स समरो'. ८. 'अस्मात्'. ९. 'घोरगद.'. १०. 'मारुते, किं भवतो भयेन प्रलीनं दुर्योधनं समर्थयसे'. ११. 'अनभिहतपाण्डुपुत्रः.' १२. 'विश्रामार्थमध्यवसितवानस्मि पातालम् ।' १३. 'एवं चोक्तवति'; 'एवं चोक्तं'. १४. 'निषिद्धसमरसमारम्भौ स्थलमुत्तारितौ भीमसुयोधनौ.

क्षितितले गदां निक्षिप्य विशीर्णरथसहस्रं[1] निहतकुरुशतगजवाजिनरम-[2]
हस्रकलेवरसमर्दसंपतद्गृध्रकङ्कजम्बुकमसद्वीरमुक्तसिंहनादमपमित्रबान्धवम-
कौरवं रणस्थानमवलोक्यायतमुष्णं च निःश्वसितवान् । ततश्च वृकोदरे[3]
णाभिहितम्—अयि भो[4] कौरवराज, कृतं बन्धुनाशदर्शनमन्युना[5] । मैवं[6]
विषादं कृथाः पर्याप्ताः पाण्डवाः समरायाहमसहाय इति ।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन ।
दंशितस्यात्तशस्त्रस्य तेन[7] तेऽस्तु रणोत्सवः ॥ १० ॥

इत्थं[8] श्रुत्वासूयान्विता दृष्टिं कुमारयोर्निक्षिप्योक्तवान्धार्तराष्ट्रः ।

कर्णदुःशासनवधात्तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्धुं त्वमेव[9] प्रियसाहसः ॥ ११ ॥

इत्युत्थाय च[10] परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ[11] विचि-
त्रविभ्रमितगदापरिभासुरभुजदण्डौ[12] मण्डलैर्विचरितुमारब्धौ भीमदुर्योधनौ ।
अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः । आह च देवो देवकी-

---

१ 'विशीर्णरथसहस्रं' इति क्वचिन्नास्ति २ 'निहतकुरुशतगजवाजिनरकलेव-रसंपतद्गृध्रकङ्कजम्बुकमुसनयोधमस्मद्वीरविमुक्तसिंहनादसवलितसमरतूर्यमबान्धवममित्रकौरवं रणस्थानमालोक्य दीर्घमुष्णं च निःश्वसितवान्' ३ 'वृकोदरेणोपगम्याभिहितम्' ४ 'भो कौरवराज' ५ 'कृतं बन्धुजननाशदर्शनमन्युना', 'कृतं बन्धुजनमन्युना', 'अलं बन्धुजनमन्युना' ६ 'विषादं मा कृथाः', ७ 'पाण्डवाः सोऽहमसहाय इति । किं च' इति बहुपुस्तकानां पाठः ८ 'वर्मितस्य' ९ 'मतो' १० 'इत्थं च श्रुत्वा किंचिदसूयान्विता दृष्टिं कुमारयोर्निक्षिप्योक्तवान् ।' इति बहुपुस्तकानां पाठः, 'इत्थं श्रुत्वासूयान्वितां निक्षिप्य कुमारयोर्दृष्टिमुक्तवान्धार्तराष्ट्रः ।' इति दशरूपकपाठः ११ 'त्वमेव' १२ 'च' इति क्वचिन्नास्ति १३ 'परस्परक्रोधाक्षेपपरुषवाक्कलहप्रस्तावितघोरसंग्रामौ'. १४ 'चित्रगदापरिघभासुरभुजभरौ मण्डलैर्विहर्तुमारब्धौ भीमदुर्योधनौ'. १५ 'अत्रान्तरेऽहं च देवेन चक्रपाणिना'

नन्दन । अपर्युषितप्रतिज्ञे च मारुतौ प्रनष्टे कौरवराजे महानासीन्नो विषाद । सप्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूत भुवनतल परिकल्पयतु भवान् । अभ्युदयोचिताश्चानवरत प्रवर्त्यन्ता समारम्भा । कृत संदेहेन ।

पूर्यन्ता सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुत सशय ॥ १२ ॥

**द्रौपदी**—( सबाष्पम् । ) ज देवो तिहुअणणाहो भणादि त कह अण्णहा भविस्सदि । (क)

**पाञ्चालकः**—न केवलमियमाशी । असुरनिपूदनस्यादेशोऽपि ।

**युधिष्ठिरः**—को हि नाम भगवता सदिष्ट विकल्पयति । क कोऽत्र भो ।

( प्रविश्य । )

**कञ्चुकी**—आज्ञापयतु देव ।

**युधिष्ठिरः**—देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजयमङ्गलाय प्रवर्त्यन्ता तदुचिता समारम्भा ।

---

(क) यद्देवस्त्रिभुवननाथो भवति तत्कथमन्यथा भविष्यति ।

---

१ 'पुनर्भीमसेनेन समासादिते सुयोधने निष्कण्टकीकृत भुवनतल परिकलयतु भवान्', २ च प्रवर्त्यन्तामनवरतमङ्गलसमारम्भा ', ३ राज्येभिषेकाय' ४. घोरकुठारभासुरकरे क्षत्रद्रुमच्छेदिनि' इति बहव पठन्ति ५ 'आणवेदि' इति पाठ ६. 'किमन्यथा सभावितन । मधुसूदनस्यादेश एवायम्' इति क्वचित्पाठ ७ भगवता' ८ देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य विजयमङ्गलाशसया प्रवर्त्यन्ता तदुचिता समारम्भा ', 'देवस्य देवकीनन्दनस्यादेशाद्वत्सस्य मे मङ्गलविजयायप्रवर्त्यन्तामनवरत तदुचिता समारंभा ',

कञ्चुकी—[1]यथाज्ञापयति देवः । ( सोत्साहं परिक्रम्य । ) भो भोः संविधातॄणां पुरःसराः, यथाप्रधानम[2]न्तर्वेश्मिका दौवारिकाश्च, [3]एष खलु भुजबलपरिक्षेपोत्तीर्णकौ[4]रवपरिभवसागरस्य निर्व्यूढ[5]दुर्वहप्रतिज्ञाभारस्य [6]सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य [7]दुःशासनोरःस्थलविदलननरसिंहस्य [8]दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य बलिनः प्राभञ्जनेर्वृ[9]कोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः । ( आकाशे । ) किं ब्रूथ—'[10]सर्वतोऽधिकतरमपि प्रवृत्तं [11]किं नालोकयसि' इति । साधु पुत्रकाः, साधु । [12]अनुक्तहितकारिता हि प्रकाशयति मनोगतां [13]स्वामिभक्तिम् ।

[14]युधिष्ठिरः—आर्य जयंधर ।

कञ्चुकी—आज्ञापयतु देवः ।

[15]युधिष्ठिरः—गच्छ प्रियख्यापक पाञ्चालकं पारितोषिकेण परितोषय ।

---

१. 'यथाज्ञापयति देवः' इति क्वचिन्नास्ति. २. अन्तर्वासिकाः'; अन्तर्वेश्मनि'. ३. 'एवं खलु'. ४. 'कौरवार्णवस्य'.—५. 'दुर्धर'.—६. 'सुयोधनानुजशतोद्धूननप्रभञ्जनस्य'. ७. 'कुमारदुःशासनोरःस्थलनरसिंहस्य'; 'बलिनः प्राभञ्जनेर्दुःशासनोरःस्थलविदलननरसिंहस्य' इति पाठौ. ८. 'दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य' इति क्वचिन्नास्ति, ९. 'वृकोदरस्य' इति क्वचिन्नास्ति. १०. 'सर्वथविक्रमपि प्रवृत्तमालोकयतु ।' इति क्वचित्पाठः. ११. 'किं वा'. १२. 'अनुकूलहितकारिता प्रकाशयति मनोगतां स्वामिभक्तिम्' इति वा पाठः. १३. 'स्वामिभक्तिम्' इत्यस्मादनन्तरं क्वचित् '(राजानमुपगम्य ।) देव, प्रथमत एव सर्वमनुष्ठितम् ।' इत्यधिकः पाठो दृश्यते. १४. 'युधि०—आर्य जयंधर । कंचुकी—आज्ञापयतु देवः ।' इति क्वचिन्नास्ति. १५. 'युधि०—प्रियख्यापकं पाञ्चालकं पाञ्चाल्या मम च पारितोषिकेण प्राच्छादय' इति पाठः.

**कञ्चुकी**—[1]यदाज्ञापयति देव । ( इति पाञ्चालकेन सह निष्क्रान्त । )

**[2]द्रौपदी**—महाराअ, किंणिमित्त उण णाहभीमसेणेण सो दुराआरो [3]भणिदो—'पञ्चाण वि अह्माण [4]मज्झे जेण दे रोअदि [5]तेण सह दे सगामो होदु' त्ति । [6]जई मद्दीसुदाण एकदरेण सह सगामो तेण पत्थिदो भवे तदो अच्चाहिद भवे । (क)

**युधिष्ठिरः**—कृष्णे, [7]एँव मन्यते जरासधघाती । [8]हतसकलसुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धव शरीरमात्रविभव कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः [9]परित्यजेदायुध तपोवन वा व्रजेत्सन्धि वा पितृमुखेन याचेत । एव सति सुदूरमतिक्रान्त प्रतिज्ञाभारो भवेत्सकलरिपुजयस्येति । समर प्रतिपत्तु पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षम सुयोधन । शङ्के चाह गदायुद्ध वृकोदरस्यैवानेन । [10]अयि सुक्षत्रिये, पश्य ।

[11]क्रोधोद्धूर्णगदस्य नास्ति सदृश सत्य रणे मारुते
कौरव्ये कृतहस्तता पुनरिय [12]देवे यथा सीरिणि ।

---

(क) महाराज, किंनिमित्त पुनर्नाथभीमसेनेन स दुराचारो भणित —'पञ्चानाप्यस्माक मध्ये येन ते रोचत तेन सह ते सङ्ग्रामो भवतु' इति । यदि माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽत्याहित भवेत् ।

---

१ 'यदाज्ञापयसि ( इतिनिष्क्रान्त । ) इति पाठ २ 'द्रौपदी—किं उण णाहेण' इति पाठ ३ 'एव्व भणिदो' इति जगद्धरसमत पाठ ४ 'मज्झे' इति क्वचिन्नास्ति ५ 'तेण सह सगामो होदु त्ति', 'तेण सह समरो होदु त्ति'. ६ 'जइ एदाण मद्दीसुदाण एकदरेणावि सह सगामो तेण पत्थिदो भवे', ७ 'एव मन्ये तस्य जरासधघातिनोऽभिप्राय ' इति पाठ , ८. 'हतसकलबन्धुवीरानुजराजन्यासु'. ९ 'परित्यज्य' १०. 'अयि इति क्वचिन्नास्ति ११. 'क्रोधादघूर्णगदस्य', 'क्रोधोद्घूर्णगदस्य'. १२ 'देवस्य या सीरिण ' इति पाठ .

**राक्षसः**—अकालोऽयं समुदाचारस्य । जलप्रदानेन संभावय [१]माम् ।

[२]**युधिष्ठिरः**—मुने, इदमासनम् । उपविश्यताम् ।

**राक्षसः**—([३]उपविश्य ।) ननु भवतापि क्रियताम् [४]आसनपरिग्रहः

[५]**युधिष्ठिरः**—(उपविश्य ।) क कोऽत्र भो, सलिलमुपनय ।

(प्रविश्य गृहीतभृङ्गार )

[६]**कञ्चुकी**—(उपसृत्य ।) महाराज, शिशिरसुरभिसलिलसपूर्णोऽयं भृङ्गारः पानभाजनं चेदम् ।

**युधिष्ठिरः**—मुने, निर्वर्त्यतामुदन्याप्रतीकारः ।

**राक्षसः**—(पादौ प्रक्षाल्योपस्पृश्य [७]विचिन्त्य ।) [८]भो, क्षत्रियस्त्वमिति मन्ये ।

**युधिष्ठिरः**—[९]सम्यग्वेत्ति भवान् । क्षत्रिय एवास्मि ।

**राक्षसः**—[१०]सुलभश्च स्वजनविनाशः संग्रामेषु प्रतिदिनमतो नादेयं भवद्भ्यो जलादिकम् । भवतु । [११]छाययैवानया सरस्वतीशिशिरतरङ्गस्पर्श[१२]मरुता चानेन विगतक्लमो भविष्यामि ।

---

१ मा भवान्'. २ युधि०—'जयधर जयधर, सलिल सलिलमुपनय। इदमासनम् । मुने, उपविश्यताम्' इति' क्वचित्पाठ ३ '( उपविश्य ।)' इत्यत्र '( तथाकृत्वा )' इति क्वचित्पाठ ४ 'आसनपरिग्रह ' '( सर्व उपविशन्ति । )' इति केचित्पठन्ति ५ युधि०—क कोऽत्र भो ।' इति पाठ ६ 'कञ्चुकी—( निष्क्रम्य पुन प्रविश्य । ) शिशिरजलसपूर्णोऽयं भृङ्गारो भाजनं चेदम् । इति क्वचित्पाठ ७ 'विचिन्त्य' इति क्वचिनास्ति ८ 'भो भो ' इति पाठ ९ सम्यग्वेदी भवान् ।' इति बहव १० 'प्रतिदिनसुलभविनाशेषु सङ्ग्रामेषु युष्मत्तो नादेयं सलिलादिकम्', ११ 'छाययैवानयाऽह सरस्वतीभूमिभागस्पृशा' इति पाठ १२. 'मरुतानेन'.

**द्रौपदी**—बुद्धिमदिए वीएहि महर्सिं ईमिणा[1] तालविन्तेण । (क)

( चेटी तथा करोति । )

**राक्षसः**—भवति[2], अनुचितोऽयमस्मासु समुदाचारः ।

**युधिष्ठिरः**—मुने[3], कथय कथमेवं भवान्परिश्रान्तः ।

**राक्षसः**—मुनिर्जनसुलभेन[4] कौतूहलेन तत्रभवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं पर्यटामि[5] समन्तपञ्चकम् । अद्य तु बलवत्तया[6] शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि ।

( सर्वे[7] विषादं नाटयन्ति । )

**कञ्चुकी**—मुने[8], न खल्वेवम् । भीमसुयोधनयोरिति कथय ।

**राक्षसः**—आः[9], अविदितवृत्तान्त एव कथं मामाक्षिपसि ।

**युधिष्ठिरः**—महर्षे[10], कथय कथय ।

**राक्षसः**—क्षणमात्र[11] विश्रम्य सर्वं कथयामि[12] भवतो न पुनरस्य वृद्धस्य ।

**युधिष्ठिरः**—कथय[13] किमर्जुनसुयोधनयोरिति ।

---

( क ) बुद्धिमतिके, वीजय महर्षिमनेन तालवृन्तेन ।

---

१. 'इमिणा' इति क्वचिन्नास्ति. २. 'अहह, भवति, अनुचितोऽयमस्मासु समुदाचारः'; ३. 'मुने सर्वं तावत्तिष्ठतु । कथं पुनरेवं' ४. 'बहुजनसुलभेन कौतूहलेन' इति पाठः. ५. 'सदा पर्यटामि' इति पाठः. ६. 'अत्यन्तबलवत्तया शरदातपस्यापर्याप्तमेवालोक्य' इति केचित्. ७. '( सर्वे विषादं नाटयन्ति । )' इति क्वचिन्नास्ति. ८. 'मुने, न खल्विदम्' इति पाठः. ९. 'कथमविदितवृत्तान्त एवमाक्षिपसि' इति पाठः. १० 'महर्षे, कथय' इति पाठः. ११. 'मुहूर्तं तिष्ठ । विश्रम्य सर्वं कथयिष्यामि भवते' इति क्वचित्पाठः. १२. 'कथयामि भवते ।' 'कथयामि भवते न पुनरस्य वृद्धापसदस्य पुरतः ।' १३. 'भगवन्, एतावदेव कथय किं पुनरर्जुनसुयोधनयोरिति' इति पाठः.

**राक्षसः**—पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमर्जुनसुयोधनयोरिति

**युधिष्ठिरः**—न भीमसुयोधनयोरिति ।

**राक्षसः**—वृत्तं तत् ।

( युधिष्ठिरो द्रौपदी च मोहमुपगतौ । )

**कञ्चुकी**—( सलिलेनासिच्य । ) समाश्वसितु देवो देवी च ।

**चेटी**—समस्ससदु समस्ससदु देवी । (क)

( उभौ संज्ञां लभेते । )

**युधिष्ठिरः**—किं कथयसि मुने, वृत्तं भीमसुयोधनयोर्गदायुद्धमिति ।

**द्रौपदी**—भअवं, कहेहि कहेहि किं वृत्तं त्ति । (ख)

**राक्षसः**—कञ्चुकिन्, कौ पुनरेतौ ।

**कञ्चुकी**—एष देवो युधिष्ठिरः । इयमपि पाञ्चालतनया ।

**राक्षसः**—आः, दारुणमुपक्रान्तं मया ।

**द्रौपदी**—हा णाह भीमसेण । ( इति मोहमुपगता । ) (ग)

**कञ्चुकी**—किं नाम कथितम् ।

**चेटी**—समस्ससदु समस्ससदु देवी । (घ)

---

(क) समाश्वसितु समाश्वसितु देवी ।

(ख) भगवन् कथय कथय किं वृत्तमिति ।

(ग) हा नाथ भीमसेन ।

(घ) समाश्वसितु समाश्वसितु देवी ।

---

१. 'ननु पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमिति' । 'युधि०—'न भीमसुयोधनयोरिति ।' २. '(सलिलमासिच्य ।)' ३. 'उपलभेते'. ४. 'भअवं, कहेहि किं वुत्तं त्ति' इति पाठः. ५. 'भगवन्, एष देवो युधिष्ठिरः' इति बहवः. ६ 'पाञ्चालराजतनया.' ७. 'मया नृशंसेन' इति बहवः पठन्ति. ८. 'भीम'.

**युधिष्ठिरः**—( सास्रम् । ) ब्रह्मन्,

पदे संदिग्ध एवास्मिन्दुःखमास्ते युधिष्ठिरः ।
वत्सस्य निश्चिते तत्त्वे प्राणत्यागोऽयं सुखी ॥ १४ ॥

**राक्षसः**—( सानन्दमात्मगतम् । ) अयमेव मे यत्नः । ( प्रकाशम् । ) यदि त्ववश्यं कथनीयं तदा संक्षेपतः कथयामि । न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम् ।

**युधिष्ठिरः**( अश्रूणि मुञ्चन् । )

सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा ।
वत्सस्य किमपि श्रोतुमेषं दत्तः क्षणो मया ॥ १५ ॥

**राक्षसः**—श्रूयताम् ।

तस्मिन्कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

**द्रौपदी**—( सहसोत्थाय । ) तदो तदो । (क)

**राक्षसः**—( स्वगतम् । ) कथं पुनरनयोर्लब्धसंज्ञतामपनयामि । ( प्रकाशम् । )

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः ।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारौ गतः ॥ १६ ॥

**युधिष्ठिरः**—हा वत्स, वृकोदर । ( इति मोहमुपगतः । )

---

(क) ततस्ततः ।

---

१. 'अहं सुखी' इति बहवः. २. 'अयं मे यत्नः । ( प्रकाशम् । ) यद्येवमवश्यकथनीयं संक्षेपेण कथयामि'. ३. 'विमुञ्चन्.' ४. 'एतद्दत्तं मनो मया' इति पाठः. ५. 'गुरुगदाभीमध्वनौ' इति पाठः. ६. 'द्रौपदी—( लब्धसंज्ञा । ) अयि, तदो किम्' इति केचित्पठन्ति. ७. 'व्यालम्ब्य प्रियशिष्यतां मुसलिना' इति क्वचित्पाठः. ८. 'संज्ञा रहः साकृता'; 'शक्ती रहस्याहिता'.

**द्रौपदी**—हा णाह भीमसेण, हा मह परिभवपडीआरपरिचत्तजीविअ, जडासुरबअहिडिम्बकिम्मीरकीचअजरासधणिसूदण, सोअन्धिआहरणचाडुआर, देहि मे पडिवअणम्। (इति मोहमुपगता।) (क)

**कञ्चुकी**—(सास्रम्।) हा कुमार भीमसेन, धार्तराष्ट्रकुलकमलिनीप्रालेयवर्ष, (ससम्भ्रमम्।) समाश्वसितु महाराज। भद्रे, समाश्वासय स्वामिनीम्। महर्षे, त्वमपि तावदाश्वासय राजानम्।

**राक्षसः**—(स्वगतम्।) आश्वासयामि प्राणान्परित्याजयितुम्। (प्रकाशम्।) भो भीमाग्रज, क्षणमेक चीयता समाश्वास। कथाशेषोऽस्ति।

**युधिष्ठिरः**—(समाश्वस्य।) महर्षे, किमस्ति कथाशेष।

**द्रौपदी**—(प्रतिबुद्ध्वा।) भअव, कहेहि कीदिसो कहासेसो त्ति। (ख)

**कञ्चुकी**—कथय कथय।

**राक्षसः**—ततश्च हते तस्मिन्मुक्षत्रिये वीरसुलभा गतिमुपगते सममसगलित भ्रातृवधशोकज बाष्प प्रमृज्य प्रत्यग्रक्षतजच्छटा

(क) हा नाथ भीमसेन, हा मम परिभवप्रतीकारपरित्यक्तजीवित, जटासुरबकहिडिम्बकिर्मीरकीचकजरासधनिषूदन, सौगन्धिकाहरणचाटुकार, देहि मे प्रतिवचनम्।

(ख) भगवन्, कथय कीदृश कथाशेष इति।

१ '(ससम्भ्रमम्।) महाराज, समाश्वसिहि समाश्वसिहि। भद्रे, समाश्वासयात्र भवतीम्।' २ 'महर्षे त्वमप्याश्वासय महाराजम्' इति बहुत्र ३ 'त्याजयितुम्' ४ 'अयि भो भीमाग्रज, क्षणमेकमाधीयतामाश्वास। कथाशेषोऽप्यस्ति।' इति बहुपुस्तकानां पाठ ५ युधि॰—(समाश्वस्य।) महर्षे, किमस्ति कथाशेष। राक्षस — ततश्च हते, ६ 'ततश्चगते तस्मिन्मुक्षत्रिये वीरसुलभा गतिं' इति वा पाठ 'समग्रमगलितभ्रातृवधशोकज बाष्पमुत्सृज्य भ्रातृवधगाण्डीव प्रत्यग्रक्षतजच्छटाचर्चिता तामेव गदां'

र्पिता तामेव गदां भ्रातृहस्तादाकृष्य निवार्यमाणोऽपि संजिघृक्षुना ासुदेवेन, आगच्छागच्छेति सोपहासं भ्रमितगदाझङ्कारमूर्च्छितगम्भीरस्तनघननिनादाहूयमानः कौरवराजेन तृतीयोऽनुजस्ते किरीटी योद्धुमारब्धः । तथाकृतिनस्तस्य गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुरतिप्रयत्नात्स्वरथमारोप्य द्वारकां नीतः ।

**युधिष्ठिरः**—साधु भो अर्जुन, तदैव प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता । अहं पुनः केनोपायेन प्राणपरित्यागाद्हृदयमुत्मा-ह्यिष्ये ।

**द्रौपदी**—हा णाह भीमसेण, ण जुत्तं दाणिं दे कणीअसं भादरं असिक्खिदं गदाये दारुणस्स सत्तुणो अहिमुहं गच्छन्तं उवेक्खिदुम् । (मोहमुपगता ।) (क)

**राक्षसः**—ततश्चाह—

**युधिष्ठिरः**—भवतु मुने, किमतः परं श्रुतेन । हा तात भीमसेन,

---

(क) हा नाथ भीमसेन, न युक्तमिदानीं ते कनीयांसं भ्रातरमशिक्षितं गदायां दारुणस्य शत्रोरभिमुखं गच्छन्तमुपेक्षितुम् ।

---

१ 'भ्रातृहस्तादयत्नादाकृष्य निवार्यमाणः संधित्सुना' इति बहवः पठन्ति २ 'भगवता वासुदेवेन'. ३ 'गम्भीरवाद्यघननिनादाहूयमानः कौरवराजेन सह' इति पाठः ४ 'तथाऽकृतिनस्तस्य गदाघातान्निधनं', 'तथा कृतिनस्तस्य गदाघातान्निधनं' ५ 'प्रयत्नात्' ६ 'एतावत्प्रतिपन्ना वृकोदरानुगमनपदवी' ७ 'प्राणापगमनमहोत्सवमुत्सहिष्ये' इति बहवः पठन्ति ८ 'हा णाह, भादुवच्छल, ण जुत्तं भादरं असिक्खिदं गदाए सत्तुणो मुहं गच्छन्तं उवेक्खिदुम्' इति बहुभिः समादृतः पाठः ९ 'हा तात भीमसेन, मम कान्तारव्यसनबान्धव, जतुगृहविपत्समुद्रतरणयानपात्र, हा किर्मीरहिडिम्बासुरजरासंधविनयैकमन्त्र, हा द्यूतपण, मम शरीरस्थितिपरिखेदशङ्कासूदन, हा मदाज्ञासंपादक, हा कौरववंशदावानल कीचकसुयोधनानुजद्रुमोन्मूलनप्रभञ्जन'

कान्तारव्यसनबान्धव, हा मच्छरीरस्थितिविच्छेदकातर, जैतुगृहनिपत्सु द्रतरणयानपात्र, हा किर्मीरहिडिम्बासुरजरासधविजयमल्ल, हा कीचकेसु योधनानुजकमलिनीकुञ्जर,

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सैा तदा
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता।
किं नामापकृत मया तदधिकं ँविम्यद्य यद्गम्यते
त्यक्त्वा नाथ सबान्धव सपदि मा प्रीति क ते साऽधुना ॥ १७

द्रौपदी—(सज्ञामुपलभ्योत्थाय च।) महाराअ, किं एद वट्टइ। (क

युधिष्ठिरः—कृष्णे किमन्यत्।

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदशैलभेदाशनिँ।
गदापरिघशोभिना भुजयुगेन तेनान्वित
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्त किल ॥ १८ ॥

---

(क) महाराज, किमेतद्वर्तते।

---

१ 'हा जतुगृहसततरणपोतपते, हा बकहिडिम्बकिर्मीरजटासुरजरासधजय' इति पाठ २ 'कीचकसुयोधनानुजशतकमलिनीकुञ्जर' ३ 'सीदता' 'त्यज्यद्य निर्वत्सल त्यक्त्वाऽनाथमबान्धव सपदि मा येनासि दूरं गत' बहुपुस्तकानां पाठ ५ '( सज्ञामुपलभ्योत्थाय च। )' इत्यत्र '( उत्थाय इति बहव पठन्ति. ६ 'किमन्यत्' इति क्वचिन्नास्ति ७ 'भङ्गाशनि' 'गदापरिघपाणिना' इति जगद्धरसमत पाठ

**द्रौपदी**[1]—णाह भीमसेण, तुए किल मे केसा संजमिदव्वा । ण जुत्तं वीरस्स खत्तिअस्स पडिण्णादं सिढिलेदुम् । ता पडिवालेहि मं जाव उवसप्पामि । ( पुनर्मोहमुपगता[2] । ) (क)

**युधिष्ठिरः**[3]—( आकाशे । ) अम्ब पृथे, श्रुतोऽयं तव पुत्रस्य समुदाचारः । मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः । तात जरासंधशत्रो, किं नाम वैपरीत्यमेतावता कालेनाल्पायुषि त्वयि[4] समालोकितं जनेन । अथवा मयैव बहूपलब्धम् ।

दत्त्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
  द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे ।
स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत्सूदतां
  वेत्सैतानि[5] विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥ १९ ॥

मुने, किं कथयसि । ('तस्मिन्कौरवभीमयोः' (६।१६) इत्यादि पठति ।

**राक्षसः**—एवमेतत् ।

**युधिष्ठिरः**[6]—धिगस्मद्भागधेयानि । भगवन्कामपाल, कृष्णाग्रज सुभद्राभ्रातः,

---

(क) नाथ भीमसेन, त्वया किल मे केशाः संयमितव्याः । न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् । तत्प्रतिपालय मां यावदुपसर्पामि ।

---

१. 'द्रौपदी—( आकाशे दत्तदृष्टिः । ) णाह भीमसेण, तुए किल मे के.. संजमिदव्वा'. २. '(इति पुनर्मोहमुपगता ।)'. ३. 'युधि०—( आकाशे दत्तदृष्टिः ।) अम्ब पृथे, ननु श्रुतोऽयं तव पुत्रस्य समुदाचारः । मामेकमनाथमकरुणो विलपन्तमुत्सृज्य क्वापि गतः' इति पाठः. ४. 'त्वयि' इति क्वचिन्नास्ति ५. 'वत्सैतानि विनश्वरस्य सहसा स्पष्टानि चिह्नानि ते'; 'तान्येतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते' इति पाठौ. ६. 'युधि०—अथवा धि...यानि । भगवन्कामपाल, कृष्णाग्रज, सुभद्राभ्रातः'.

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणा न धर्मो
[1]० रूढ सख्य तदपि गणित नानुजस्यार्जुनेन ।
तुल्य काम भवतु भवत शिष्ययो स्नेहेनन्ध
कोऽय पन्था यदसि निर्मुखो मन्दभाग्ये मयीत्थम् ॥ २० ॥

(द्रौपदीमुपगम्य ।) अयि पाञ्चालि, उत्तिष्ठ। समानदु खानेवाना भवाव। मूर्च्छया किं मामेनर्मोतिसधत्से ।

**द्रौपदी**—(लब्धसज्ञा ।) बन्धेदु णाहो दुज्जोहणरुहिराद्देण हत्थेण दुस्सासणविमुक्क मे केसहत्थम्। हञ्जे बुद्धिमदिए, तव पच्चक्ख एव्व णाहेण पडिण्णादम्। (कञ्चुकिनमुपेत्य ।) अज्ज, किं संदिट्ठ दाव मे देवेण देवकीणन्दणेण पुणो वि केसबन्धण आरम्भीअदुत्ति । ता उवणेहि मे पुंफ्फदामाइ। विरएहि दाव कबरीम्। करेहि भअवदो णाराअणस्स वअणम्। णं क्खु सो अलीअ सदिसदि । अहवा किं मए सतैत्ताए भणिदम्। अचिरगद अज्जउत्त अणुगमिस्सम् ( युधिष्ठिरमुपेगम्य ।) महाराअ,

(क) बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दु शासनविमुक्त मे केश हस्तम्। हञ्ज बुद्धिमतिके, तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम्। आय, किं संदिष्ट तावन्मे देवेन देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति । तदुपनय मे पुष्पदामानि। विरचय तावत्कबरीम्। कुरु भगवतो नारायणस्य वचनम् । न खलु सोऽलीक सदिशति। अथवा किं मया सतमया भणितम्। अचिरगतमाय

१ 'नानुजस्यानुजे मे' इति बहव पठन्ति २ 'प्रेमबन्ध', ३ 'विमुखो मन्दभाग्ये मयि त्वम्' ४ 'उत्तिष्ठोत्तिष्ठ' ५ 'अभिसंधत्से' ६ 'बन्धेदु बन्धेदु' ७ 'दुस्सासणमोइद' ८ 'अज्ज, किं इति क्वचिन्नास्ति ९ 'मे देवकीणन्दणेण केसरअणा आरम्भीअदु त्ति', १० 'फुल्लदामाइ', ११ 'पुरिसोत्तमस्स' १२ 'णहि अलीअ मन्तेदि सो' इति पाठ १३ 'अदिसंतत्ताए' १४ अइरं गद' १५ 'उवेत्य'

आदीवअ चिदाम् । तुमं वि खत्तधम्मं अणुबन्धन्तो एव्व णाहस्स जीविदहरस्स अहिमुहो होदि । अहवा जं दे रोअदि । (क)

**युधिष्ठिरः**—युक्तमाह पाञ्चाली[3] । कञ्चुकिन्, क्रियतामियं तपस्विनी चिंतासंविभागेन सह्यवेदना । ममापि सज्जं धनुरुपनय । अलमथवा धनुषा ।

> तस्यैव देहरुधिरोक्षितपाटलाङ्गी-[6]
> मादाय संप्रति गदामपविध्य चापम् ।
> भ्रातृप्रियेण कृतमद्य यदर्जुनेन
> श्रेयो ममापि हि तदेव कृतं जयेन ॥ २१ ॥

**राक्षसः**—राजन्, रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु । वृथा तत्र गमनम् ।

**कञ्चुकी**[10]—धिङ्मुने, राक्षससदृशं हृदयं भवतः ।

**राक्षसः**—( सभयं स्वगतम् । ) किं ज्ञातोऽहमनेन । ( प्रकाशम् । ) [11]भोः कञ्चुकिन्, तयोर्गदया[12] खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः । जानामि च तयोर्गदायां[13] भुजसारम् । दुःखितस्य पुनरस्य[14] राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि ।

---

पुत्रमनुगमिष्यामि । महाराज, आदीपय चिताम् । त्वमपि क्षत्रधर्ममनुबध्नन्नेव नाथस्य जीवितहरस्याभिमुखो भव । अथवा यत्ते रोचते ।

---

१. 'आदीवअ मे चिदाम् । तुमं वि खत्तधम्मं अणुवट्टन्तो एव्व' इति बहुपुस्तकानां पाठः. २. 'अहवा जं दे रोअदि' इति क्वचिन्नास्ति. ३. 'याज्ञसेनी'. ४. 'चितासविधानेन हतवेदना' इत्यपि पाठः. ५. 'उपानय'. ६. 'पीवराङ्गीम्'. ७. 'संयति'. ८. 'अपहाय चापम्'; 'अपविद्धचापः'. ९. 'जयेन किं मे' इति क्वचित्पाठः. १०. 'कंचुकी—सकोपम् । ब्रह्मन्, अलं कथितेन । निश्चितं नृशंसराक्षसमत्रभवतो हृदयम्'; ११. 'भोः कंचुकिन्, एतद्ब्रवीमि' इति बहवः. १२. 'तयोर्गदायुद्धं प्रवृत्तमेवार्जुनसुयोधनयोः'. १३. 'गदायुद्धे'. १४. 'पुनरस्य' इति क्वचिन्नास्ति.

**युधिष्ठिरः**—( बाष्पं विसृजन् । ) साधु महर्षे, साधु । सुस्निग्धम-भिहितम् ।

**कञ्चुकी**—महाराज, किं नाम शोकान्धतया देवेन देवकल्पेनापि प्राकृतेनेव त्यज्यते क्षात्रधर्मः ।

**युधिष्ठिरः**—आर्य जयंधर,

शक्ष्यामि तौ परिघपीवरबाहुदण्डौ
वित्तेशशक्रपुरदर्शितवीर्यसारौ ।
भीमार्जुनौ क्षितितले प्रविचेष्टमानौ
द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम् ॥ २२ ॥

अयि पाञ्चालराजतनये, मद्दुर्नयप्राप्तशोच्यदशे, यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं संभावयावः ।

**द्रौपदी**—अज्ज, करेहि दारुसंचअम् । पज्जलीअदु चिदा । तुवरदि मे हिअअं णाधं पेक्खिदुम् । ( सर्वतोऽवलोक्य । ) कहं ण को वि णाधेण विणा महाराअस्स वअणं करेदि । हा णाहं भीमसेण, तं एव्व एदं राअउलं तुए विरहिदं परिअणो वि संपदं परिहरदि । (क)

**राक्षसः**—सदृशमिदं भरतकुलवधूनां यत्पत्युरनुमरणम् ।

---

(क) आर्य कुरु दारुसंचयम् । प्रज्वाल्यतां चिता । त्वरते मे हृदयं नाथं प्रेक्षितुम् । कथं न कोऽपि नाथेन विना महाराजस्य वचनं करोति । हा नाथ भीमसेन, तदेवेदं राजकुलं त्वया विरहितं परिजनोऽपि सांप्रतं परिहरति ।

---

१. 'उत्सृज्य'. २. सुश्लिष्टं'. ३. 'किं नाम' इति क्वचिन्नास्ति. ४. 'देवकल्पेनापि देवेन त्वया' इत्यपि पाठः. ५. 'क्षत्रधर्मः'. ६. 'द्रक्ष्यामि तौ'; 'शक्नोमि तौ'. ७. 'वित्तेशशक्रवरुणाधिकवीर्यवन्तौ'; 'वित्तेशशक्रवरुणाधिकवज्रसारौ'. ८. 'परिवर्तमानौ'.

**युधिष्ठिरः**—महर्षे, न कश्चिच्छृणोति तावदावयोर्वचनम्। तदिन्धनप्रदानेन प्रसादः क्रियताम्।

**राक्षसः**—मुनिजनविरुद्धमिदम्। (स्वगतम्।) पूर्णो मे मनोरथः। यावदनुपलक्षितः समिन्धयामि वह्निम्। (प्रकाशम्।) राजन्, न शक्नुमो वयमिहैव स्थातुम्। (इति निष्क्रान्तः।)

**युधिष्ठिरः**—कृष्णे, न कश्चिदस्मद्वचनं करोति। भवतु। स्वयमेवाहं दारुसंचयं कृत्वा चितामादीपयामि।

**द्रौपदी**—तुवरदु तुवरदु महाराओ। (क)

(नेपथ्ये कलकलः।)

**द्रौपदी**—(सभयमाकर्ण्य।) महाराअ, कस्स वि एसो बलदप्पिदस्स विसमो सत्थणिग्घोसो सुणीअदि। अवरं वि अप्पिअं सुणिदुं अत्थि णिब्बन्धो तदो विलम्बीअदु। (ख)

**युधिष्ठिरः**—न खलु विलम्ब्यते। उत्तिष्ठ।

(इति सर्वे परिक्रामन्ति।)

**युधिष्ठिरः**—अयि पाञ्चालि, अम्बायाः सपत्नीजनस्य च किंचित्कदिदं निवर्तय परिजनम्।

---

(क) त्वरतां त्वरतां महाराजः।

(ख) महाराज, कस्याप्येष बलदर्पितस्य विषमः शस्त्रनिघोषः श्रूयते। अपरमप्यप्रियं श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यताम्।

---

१ 'महर्षे' इति क्वचिन्नास्ति. २ 'कश्चिदिदानीं शृणोति' ३ 'इन्धनप्रदानेन प्रसादं कर्तुमर्हसि' इति पाठः ४ 'पूर्णा मे मनोरथाः' इति बहव ५. 'समीपेऽहमिन्धनमादीपयामि' इत्यपि पाठः ६ 'वयमिहैव स्थातुम्', ७ 'कृष्णे न कश्चिदिदानीमेतत्करिष्यति। भवतु। स्वयमेव शुष्कदारुसंचयं कृत्वा चिताप्रनामानमात्मना दीपयामि' इति केचित्पठन्ति ८ 'वेणीबलदप्पिदस्स विसमो सद्दणिग्घोसो ९ 'विलम्बीअदि' १० 'तत्रभवत्या अम्बायाः' ११ निवार्यतां परिजनः' इति पाठः

**द्रौपदी**—महाराअ, अम्बाए एव्व सदिट्ठव्वम्—'जो सो बअहिडिम्बकिम्मीरजडासुरजरासधविजअमल्लो मज्झमपुत्तो दे सो मम हदासाए पक्खवादेण परलोअ गदो' त्ति। (क)

**युधिष्ठिरः**—भद्रे बुद्धिमतिके, उच्यतामस्मद्वचनादम्बा।

येनासि तत्र जतुवेश्मनि दीप्यमाने
निर्वाहिता सह सुतैर्भुजयोर्बलेन।
तस्य प्रियस्य बलिनस्तनयस्य पाप-
माख्यामि तेऽम्ब कथयेत्कथमीदृगन्य. ॥ २३ ॥

आर्य जयधर, त्वया सहदेवसकाशं गन्तव्यम्। वक्तव्यश्च तत्रभवान्माद्रेय कनीयान्सकलकुरुकुलकमलाकरदावानलो युधिष्ठिरः परलोकमभिप्रस्थित प्रियानुजमप्रतिकूल सततमाशासनीयमसमूढं व्यसनेऽभ्युदये च भवन्तमविरलमालिङ्ग्य शिरसि चाघ्रायेद प्रार्थयते—

मम हि वयसा दूरेणाल्प· श्रुतेन समो भवा-
न्सहजकृपया बुद्ध्या ज्येष्ठो मनीषितया गुरु.।

---

(क) महाराज, अम्बायै एव सदेष्टव्यम्—य स बकहिडिम्बकिर्मीरजटासुरजरासधविजयमल्लोऽपि मध्यमपुत्रस्ते स मम हताशाया पक्षपातेन परलोक गत ' इति।

---

१. 'एव्व महाराअ, अम्बाए सदिसिस्सम्' इति वा पाठ. २. 'बअहिडिम्बम्मीरजरासधजअमल्लो' इति पाठ ३. 'निर्वासिता' ४. 'कोऽन्यस्तवाम्ब कथयेत्कथमीदृशस्य' इति बहुसमत पाठ· 'आख्यामि तेऽम्ब कदन कथमीदृशस्य', ५ त्वमपि सहदेवसकाश गच्छ, ६ 'तत्रभवान्पाण्डुकुलवृहस्पतिर्वैमात्रेयः सकलकुरुकुलकमलाकरवाडवानल.' ७ प्रियमनुजमनुकूल' इति पाठ. ८:. 'आशसनीयमसमूढं' इत्यत्र 'आसन्नं' इति क्वचित्पाठः ९ 'धृतिमन्तं भवन्त' इति बहुसमत पाठः १०. 'अचिरं' ११. दूरेण त्वं'. १२ 'कृतसहजया बुद्ध्या';

शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥ २४ ॥

अपि च । बालिशचरितस्य नित्याभिमानिनोऽस्मत्सदृशहृदयसारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यम् । नानुगन्तव्यास्मत्पदवी । त्वया हि वत्स,

विस्मृत्यास्मान्श्रुतिविशदया प्रज्ञया सानुजोऽथ
पिण्डान्पाण्डोरुदकपृषतानश्रुगर्भान्प्रदातुम् ।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥ २५ ॥

गच्छ जयंधर, अस्मच्छरीरस्पृष्टिकया शापितेन भवताऽकालहीनमिदमवश्यमावेदनीयम् ।

**द्रौपदी**—हला बुद्धिमदिए, भणाहि मह वअणेण पिअसही सुभद्दाम्—'अज्ज वच्छाए उत्तराए अवण्णसत्ताए चउत्थो मासो वट्टदि । सव्वधा णाविउले तं णिक्खिवेसि । कदा वि इदो परलोअगदस्स ससुरउलस्स अह्माणं वि सलिलबिन्दुदो भविस्सदि' त्ति । (क)

**युधिष्ठिरः**—(सास्रम् ।) भोः कष्टम् ।

---

(क) हला बुद्धिमतिके, भण मम वचनेन प्रियसखीं सुभद्राम्—'अद्य वत्साया उत्तराया आपन्नसत्त्वायाश्चतुर्थो मासो वर्तते । सर्वथा नाभिकुले तां निक्षिपसि । कदापीतः परलोकगतस्य श्वशुरकुलस्यास्माकमपि सलिलबिन्दुदो भविष्यति' इति.

---

१. 'बालिशचरितस्य विद्याभिमानिनो मद्धृदयसारस्य'; 'बाल्ये शीलभिन्नस्य नित्यमभिमानिनोऽस्मत्स'शहृदयसारस्य' इति पाठान्तराणि. २. 'श्रुतिविशदया स्वात्मजौ चात्मबुद्धया क्षीणे पाण्डावुदकपृषतानश्रुगर्भान्प्रदातुम्' ३. 'शापितोऽसि त्वयाऽकालहीनमिदमवश्यमावेदनीयम्' ४. 'सुभद्दाअ', ५. (सास्रम् ।) इति क्वचिन्नास्ति.

शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्यन्तबन्धे ।
दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥ २६ ॥

साधु । इदानीमध्यवसितं करणीयम् । (कञ्चुकिनमवलोक्य ।) आर्य जयधर, स्वशरीरेण शापितोऽसि तथापि न गम्यते ।

**कञ्चुकी**—(साक्रन्दम् ।) हा देव पाण्डो, तव सुतानामजातशत्रु-भीमार्जुननकुलसहदेवानामयं दारुणो दैशापरिणामः । हा देवि कुन्ति भोजराजभवनपताके,

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिना ।
आचार्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
दग्धं त्वत्सुतकाननं ननु मही यस्याश्रयाच्छीतला ॥ २७ ॥

(इति रुदन्निष्क्रान्तः ।)

**युधिष्ठिरः**—जयधर जयधर,

(प्रविश्य)

**कञ्चुकी**—आज्ञापयतु देव ।

---

१ शाखारोह–' २ 'पर्यङ्कबन्धे'. ३ 'द्रापदि, साधयेदानीमध्यवसितम् ।' इति बहुसमतः पाठः ४ 'आर्य जयधर, अस्मच्छरीरेण शापितोऽसि', ५ 'प-रिणामः.' ६ 'भोजकुलपताके' ७ 'नलिनव्यालोलने दन्तिना', 'नलिनीव्यालो-डनादन्तिना' इति पाठौ ८ 'दग्धं त्वत्सुतकाननं तव मही यच्छायया शीतला', 'दग्धं तत्सुतकाननं तव मही यच्छायया शीतला', दग्धं तत्सुतकाननं तव मही यस्याश्रयाच्छीतला', 'दग्धं तत्सुतकाननं समभवद्यस्याश्रयं शीतलं' इति पाठान्तराणि

**युधिष्ठिरः**—वक्तव्यमिति ब्रवीमि । न पुनरेतावन्ति भागधेयानि नः । यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता ।

हली हेतुः सत्यं भवति मम वत्सस्य निधने
तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।
इह क्रोधः कार्यो न खलु यदि च प्राणिपि ततो
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपदवीम् ॥ २८ ॥

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

**युधिष्ठिरः**—(अग्निं दृष्ट्वा सहर्षम् ।) कृष्णे, ननूद्गतशिखाहस्ताहूतास्मद्विधव्यसनिजनः समिद्धो भगवान्हुताशनस्तत्रेन्धनीकरोम्यात्मानम् ।

**द्रौपदी**—पसीददु पसीददु महाराओ इमिणा अपच्छिमेण पणएण । अहं दाव अग्गदो पविसामि । (क)

**युधिष्ठिरः**—सहितावेवाभ्युदयमुपभोक्ष्यावहे ।

---

(क) प्रसीदतु प्रसीदतु महाराजोऽनेनापश्चिमेन प्रणयेन । अहं तावदग्रतः प्रविशामि ।

---

१. 'वक्तुमिच्छामि । न पुनरेतावन्ति भागधेयानि युष्माकम् ।' इति बहुषु पुस्तकेषु पाठः. २. 'अतः. ३. 'मयि च प्रेम भवता' इत्यपि पाठ. ४. 'यथा'. ५. '(अग्निं दृष्ट्वा सहर्षम् ।)' इत्यत्र '( सहर्षम् । )' इति पुस्तकान्तरे पाठः. ६. 'कृष्णे, ननूद्गत–' इत्यत्र 'कृष्णे, नन्वयमुद्गत–' ७. शिखाहूतास्मद्विधव्यसनि-जनः समिद्धो भगवान्हव्यभुग्' इति क्वचित्पाठः. ८. 'यदा तदा चेन्धनीकरोम्यात्मानं' तत्रेन्धनमात्मानं करिष्ये' इति पाठौ. ९. 'पसीददु महाराओ मम इमिणा'. १०. 'अहं एव्व दाव अग्गदो पविसामि'; ११. 'युधि०—यद्येवं सहितावेवाभ्युदयमुपभोक्ष्यावहे'.

